कविहृदयम्–

# वाक्कर्मचिन्तनानां शुद्धिः

**असन्ति कर्माण्यसतो विचारान्**
**विदूरय द्रागसतीश्च वाचः।**
**हे दीनबन्धो कुरु नः प्रगाढां**
**प्रेम्णः प्रवृद्धिं मनसो विशुद्धिम्॥**

**– ई.पी. भरत पिषारडी**
**(कामधेनुनामकात् पुस्तकात्)**

कविः अत्र भगवन्तं प्रार्थयते– "भगवन्! अस्माभिः असमीचीनानि कार्याणि कृतानि यथा न भवेयुः, अस्माकं मनसि दुष्टाः विचाराः यथा न उद्भवेयुः, अस्माकं मुखात् असमीचीनानि वचनानि यथा न निर्गच्छेयुः तथा करोतु। अस्माकं मनः शुद्धं यथा स्यात् तथा करोतु। अस्माकं स्नेहभावं वर्धयतु" इति।

निर्मलहृदयानां सदा एकम् एव चिन्तनं भवति – मम वचनं, चिन्तनं, क्रिया च सदा निर्मलं स्यात् इति। तदर्थं ते सदा प्रयतन्ते। क्रिया-वचन-चिन्तनेषु नैर्मल्यस्य रक्षणं न तावत् सुकरम्। अस्मासु स्थिताः कोपोद्वेगखेदादयः, अकस्मात् आपतन्ति कष्टानि, विलक्षणा परिस्थितिः, स्वाचिन्तनानुगुणं व्यवहरन्तः जनाः, धनपारवश्यता इत्यादयः अस्माकं वचनं, चिन्तनं, क्रियां च कलुषीकर्तुम् अर्हन्ति। अतः एतेषु नैर्मल्यं रक्षणीयं चेत् सदा अस्माभिः जागरूकता आश्रयणीया भवति, विशेषप्रयत्नश्च करणीयः भवति।

परेषां पीडा यथा न स्यात् तथा जीवनं यापनीयम् इति सर्वे इच्छन्ति। परेषां पीडा कालान्तरे अस्मान् साक्षात् परम्परया वा पीडयेत् एव। यद्यपि अस्माकं चिन्तनदुष्टता साक्षात् परान् न पीडयति, तथापि वाक्कर्मादिद्वारा तस्य परपीडकत्वम् अस्ति एव। अत एव कविः वाक्शुद्धिं क्रियाशुद्धिं च प्रार्थयन् चिन्तनशुद्धिम् अपि प्रार्थयते।

# Don't you owe the














# चन्दमामा

जनवरी-१९९२

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ४-००

वार्षिकं ग्राहकशुल्कं रू. ४८-००




# चन्दमामा

संस्थापकः– **'चक्रपाणिः'** सञ्चालकः– **'नागिरेड्डी'**

**न**वं वर्षम् उपस्थितम् अस्ति। एषु दिनेषु तत्र तत्र नवजागतिकव्यवस्था इति विषयः चर्च्यमाणः दृश्यते। एतद्विषये गभीरं चिन्तयितुम् एषः सुसमयः।

अमेरिकाध्यक्षेण जार्ज् बुषुवर्येण एषः विषयः सर्वप्रथमम् उपस्थापितः, यदा च तेन खातयुद्धे जयं प्राप्तम् आसीत्। किन्तु एतस्याः व्यवस्थायाः स्वरूपविषये इदमित्थम् इति किमपि न उक्तम् तेन। किन्तु तेन किं चिन्तितं स्यात् इति ऊहां तु कर्तुं शक्नुमः वयम्।

गतवर्षे काश्चन विशेषघटनाः घटिताः। ताः च– सोवियत् देश-युगोस्लावियाप्रभृतिषु विशालगणराज्यव्यवस्थायाः असाफल्यम्, स्वायत्तशासनं स्वातन्त्र्यं च प्राप्तवतां लघुदेशानाम् आविर्भावः, शक्तिमद्राष्ट्रेषु सैनिकशक्तेः न्यूनीकरणार्थं इच्छा प्रयत्नः च, क्लेशपीडितेषु शान्तेः पुनः प्रतिष्ठापनम् इत्यादयः। एताः घटनाः नवजागतिकव्यवस्थायाः आशाम् अभिवर्धयन्ति। शान्तिविषये समालोचनार्थं बहवः समुत्सुकाः इति तु अन्यत् आशाबीजम्।

तर्हि इदानीम् अग्रे किं करणीयम्? चीनादेशीयः ली पेङ्ग् अन्ताराष्ट्रियव्यवस्था कथं स्यात् इति सूचयन् वदति– "अन्ताराष्ट्रियाः विषयाः सर्वदेशानां सहभागेन चर्चिताः चेत् जागतिकी शान्तिः सुरक्षा च रक्षिता स्यात्" इति। तेन एतदपि उक्तं यत् शान्तिप्रतिपादकानि सहकारतत्त्वानि (यथा नेहरूमहोदयेन, नस्सारावर्येण, मार्षल्टिटोवर्येण च अलिप्तराष्ट्रकूटस्य मूलभूतं तत्त्वं पञ्चशीलतत्त्वम् इति प्रतिपादितं तथा) नवजागतिकव्यवस्थायाः मूलानि स्युः इति।

इदानीं भारतीयराजप्रतिनिधिना डा. इन्दुप्रकाश सिंघ्महोदयेन नवसामाजिकव्यवस्थायाः स्पष्टं स्वरूपं निर्णेतव्यम् अस्ति। सः एतं विचारं सहकारिदेशकूटनाम्ना निर्दिशति, यत्र अब्राहिं लिङ्कन्वर्यस्य राजकीयज्ञानं, लेनिन्वर्यस्य आर्थिकचिन्तनं, महात्मगान्धेः नैतिकतत्त्वशास्त्रं च सम्मिलितं स्यात्।

'नवं वर्षं नवं हर्षं दद्यात्' इति आशास्ते चन्दमामा।

सम्पुटः–८ जनवरी–१९९२ सञ्चिका–१०

प्रतिकृतिमूल्यं रू. ४-००  *  वार्षिकं ग्राहकशुल्कं रू. ४८-००

रसप्रश्नाः—

# इन्द्रजिद्वधः

(यथा यथा दिनानि गतानि तथा तथा रावणः क्षीणशक्तिः जातः। तथापि तेन विवेकस्तु न प्राप्तः। राक्षसवीराः बहवः मृताः। कुम्भः निकुम्भश्चापि मृतौ। ततः रावणस्य अन्तिमावलम्बनम् इन्द्रजित् रणरङ्गम् आगतः। वाल्मीकिरामायणस्य एतां घटनाम् आधारीकृत्य अधः केचन प्रश्नाः सज्जीकृताः। युक्तानि उत्तराणि जानन्तु।)

I. निकुम्भस्य वधस्य अनन्तरं रणरङ्गम् आगतः मकराक्षः कस्य पुत्रः?
   (अ) विश्वामित्रयागसन्दर्भे रामेण निवारितस्य दूषणस्य पुत्रः।
   (आ) विश्वामित्रयागसन्दर्भे रामेण निवारितस्य खरस्य पुत्रः।
   (इ) सीताम् अपहर्तुम् आगतायाः ताटक्याः पुत्रः।

II. स च मकराक्षः केन वीरेण केन अस्त्रेण हतः?
   (अ) लक्ष्मणेन, ऐन्द्रास्त्रेण।
   (आ) अङ्गदेन, वारुणास्त्रेण।
   (इ) रामेण, आग्नेयास्त्रेण।

III. रणरङ्गम् आगतः इन्द्रजित् अल्पं विजयं प्राप्य रामपक्षीयान् व्यामोहयितुं मायया सीतां सृष्ट्वा तस्याः शरीरं विदारितवान्। तत् तेन कुत्र कृतम्?
   (अ) रामस्य सम्मुखे। (आ) सर्वेषु पश्यत्सु रणमध्ये। (इ) हनूमतः पुरतः।

IV. मायासीतां हत्वा पुनरपि अस्त्राणि प्राप्तुम् इन्द्रजित् कं/कां पूजितवान्?
   (अ) इन्द्रम्। (आ) लङ्काधिदेवताम्। (इ) निकुम्भिलाम्।

V. घोरयुद्धस्य अनन्तरं लक्ष्मणः इन्द्रजितं हतवान्। तच्च केन अस्त्रेण?
   (अ) ऐन्द्रास्त्रेण। (आ) ब्रह्मास्त्रेण। (इ) पाशुपतास्त्रेण।

VI. इन्द्रजितं संहृत्य प्रत्यागतस्य लक्ष्मणस्य शरीरे जातानां व्रणादीनां चिकित्सां कः कृतवान्?
   (अ) सुषेणः। (आ) जाम्बवान्। (इ) अश्विनीदेवते।

उत्तराणि—

I. – (आ). II. – (इ). III. – (इ). IV. – (इ). V. – (अ). VI. – (अ).

वार्ताविशेषः–

# बाल्टिक्राज्येषु पुनः स्वातन्त्र्यम्

संयुक्तराष्ट्रसङ्घस्य ४६ तमम् अधिवेशनं गते सप्टम्बर्-१७ दिनाङ्के प्रवृत्तम्। तत्र सप्तानां नूतनदेशानां सदस्यता अनुमता। तेषु सोवियत्राष्ट्रतः पृथग्भूय स्वातन्त्र्यं प्राप्तवन्तः देशाः त्रयः– एस्टोनिया, लाट्विया, लिथोनिया चेति। अन्ये च चत्वारः– उत्तरकोरिया, दक्षिणकोरिया, पेसिफिक्द्वीपेषु अन्यतमौ मैक्रोनेशिया-मार्शल्द्वीपौ च।

सोवियत्राष्ट्रतः पृथग्भवनानन्तरम् अल्पे एव काले पूर्वोक्तैः त्रिभिः बाल्टिक्राज्यैः संयुक्तराष्ट्रसङ्घस्य सदस्यता प्रप्ता। पूर्वं रशियासाम्राज्यान्तर्गताः एते बाल्टिक्देशाः १९१७ तमे वर्षे प्रवृत्तायाः रशियाक्रान्तेः हेतोः जार्-अधिकारतः विमुक्तिं प्राप्य स्वतन्त्राः अभवन्। किन्तु द्वितीयजागतिक-युद्धस्य अनन्तरं १९३९ तमे वर्षे रशियानायकस्य स्टालिन्वर्यस्य, जर्मन्नेतुः हिट्लर्वर्यस्य च मध्ये यः सन्धिः जातः तस्य फलतः १९४० तमे वर्षे एते बाल्टिक्देशाः पुनरपि सोवियत्सङ्घाधीनाः जाताः। ततः पञ्चाशतः वर्षाणाम् अनन्तरम् इदानीं पुनः ते स्वातन्त्र्यं प्राप्तवन्तः।




सर्वप्रथमं लिथोनिया १९९० तमे वर्षे मार्च्मासे स्वस्य स्वातन्त्र्यम् अघोषयत्। तस्मिन् एव वर्षे अगस्ट्मासे विद्रोहकारणतः सोवियत् अध्यक्षः ७० घण्टाः यावत् अधिकारस्थाने न आसीत्। एषः एव सुसमयः इति मन्यमानौ एस्टोनिया-लाट्वियादेशौ अपि स्वतन्त्रौ जातौ। गोर्बचेव्वर्यः पुनरपि यदा अधिकारसूत्राणि गृहीतवान् तदा सः बाल्टिक्देशानां स्वातन्त्र्यम् अङ्गीकृतवान्। सप्टम्बर्मासे सप्तमे दिनाङ्के प्रवृत्ते




समावेशे एषः अङ्गीकारः कृतः। एतस्य परिणामतः, पञ्चाशद्वर्षेभ्यः पूर्वं छिन्ना स्वातन्त्र्यधारा पुनः अनुवृत्ता।

एतदनन्तरं बाल्टिक्देशाः संयुक्तराष्ट्र-सङ्घस्य सदस्यतां प्राप्तुं प्रार्थनापत्रं प्रेषितवन्तः। एषा च प्रार्थना प्रथमं सुरक्षापरिषदा ततः विधानपरिषदा च अनुमता। एतैः त्रिभिः देशैः १९१७ तः १९४० यावत् तत्कालीनस्य राष्ट्रसङ्घस्य (लीग् आफ् नेषन्स्) सदस्यता तु प्राप्ताः आसीत् एव। संयुक्तराष्ट्रसङ्घस्य सदस्यतां प्राप्य सन्तुष्टः लाट्वेनियाध्यक्षः अण्टोली गार्बनोव्स् उक्तवान्– "द्वितीयजागतिक-युद्धसन्दर्भे स्वतन्त्रराष्ट्रपरिवारतः दूरं गताः सदस्याः इदानीं पुनः परिवारं प्रविष्टवन्तः" इति।

संयुक्तराष्ट्रसङ्घाध्यक्षः पेरेजडी कुलर् ध्वजविमोचनोत्सवे भाषमाणः उक्तवान् यत् सदस्यताविषये संयुक्तराष्ट्रसङ्घेन अपूर्वः क्रमः अनुसृतः इति।

संयुक्तराष्ट्रसङ्घस्य समावेशे उपस्थिताः त्रयः अपि बाल्टिक्देशाः उक्तवन्तः यत् अविलम्बेन रशियासेना अस्मद्राज्यतः निर्गच्छेत् इति। ते एतदपि उक्तवन्तः यत् सोवियद्देशेन सह अस्माकम् आर्थिकसम्बन्धः राजकीयसम्बन्धः च भवति एव इति। तेषाम् एषः आशयः सुस्पष्टः आसीत् यत् प्रतिवेशिदेशरूपेण वयं सोवियत्देशेन सह मधुरं सम्बन्धं स्थापयितुम् इच्छामः इति।



# वाणिज्यरहस्यम्

सीतापुरनामके ग्रामे श्रीपादः नाम कश्चन वणिक् आसीत्। किन्तु अन्ये वणिजः इव तेन प्रभूतः लाभः तु न सम्पादितः आसीत्। श्रीपादस्य पुत्रः वेणुगोपालः। प्राप्तवयस्कः सः वाणिज्ये पितुः साहाय्यं करोति स्म। 'मम पुत्रः सर्वाणि वाणिज्यतन्त्राणि ज्ञात्वा वाणिज्ये प्रसिद्धिं प्राप्नुयात्' इति श्रीपादस्य इच्छा।

सः तदा तदा पुत्रं वेणुगोपालं वदति स्म– "मम जन्मकुण्डली उत्तमा नास्ति। भवतः न तथा इति ज्योतिषिकेण उक्तम् अस्ति। मया तु जीवने वाणिज्यतः विशेषलाभः न सम्पादितः। भवान् वा वाणिज्यतन्त्राणि ज्ञात्वा लाभं सम्पाद्य वाणिज्यं वर्धयन् कीर्तिं प्राप्नुयात् इति मम आशा। न जाने, एतत् कथं पूर्यते इति" इति।

अथ कदाचित् बन्धुः परमशिवः, श्रीपादस्य गृहम् आगतवान्। वार्तालापसन्दर्भे श्रीपादस्य आशयं ज्ञात्वा उक्तवान् सः– "भवता वाणिज्ये प्रगतिः न साधिता यत् तत्र जन्मकुण्डलीफलं न कारणम्। वाणिज्ये काल-देश-जनानुगुणं बहवः अंशाः व्यवहारे योजनीयाः भवन्ति। तत् कथम् इति भवता न ज्ञातम्। अस्माकं ग्रामे नारायणगुप्तः नाम चतुरः वणिक् अस्ति। सः मम आत्मीयः। अतः भवतः पुत्रः कानिचन दिनानि यावत् तस्य साहाय्यकत्वेन तिष्ठतु। तदा सहजतया एतेन वाणिज्यतन्त्राणि ज्ञायन्ते। भवतः आशयः पूर्णः भविष्यति" इति।

एषा सूचना श्रीपादाय अरोचत। सः परमशिवेन सह स्वपुत्रं प्रेषितवान्।

परमशिवः वेणुगोपालेन सह गत्वा नारायणगुप्तं दृष्ट्वा उक्तवान्– "एषः मम



बन्धोः पुत्रः। एषः सर्वाणि वाणिज्यतन्त्राणि यथा जानीयात् तथा करणं भवतः कार्यम्। यावत् आवश्यकं तावत्कालं एषः भवत्समीपे स्थास्यति" इति।

एवं वेणुगोपालः नारायणगुप्तस्य आपणं प्रविष्टवान्।

कदाचित् महादेवः नाम कश्चन कृषिकः नारायणगुप्तस्य आपणम् आगत्य उक्तवान्– "समीचीनः माषः आवश्यकः, प्रदर्शयतु तावत्" इति। पार्श्वे स्थितः वेणुगोपालः माषम् आनीय प्रदर्शितवान्।

महादेवः माषं परीक्ष्यादृष्ट्या दृष्ट्वा, सकृत् आघ्राय– "इतोऽपि उत्तमः माषः नास्ति वा?" इति पृष्टवान्।

"नास्ति खलु श्रीमन्! विद्यमानेषु उत्तमः एषः एव" इति उक्तवान् वेणुगोपालः।

तत् श्रुत्वा ततः गन्तुम् उद्युक्तः अभवत् महादेवः। तदा तत्रैव स्थितः नारायणगुप्तः वेणुगोपालं दृष्ट्वा– "ह्यः रात्रौ काश्चन माषगोण्यः आगताः खलु? अन्तः गत्वा दक्षिणान्ते स्थितायाः गोणीतः माषान् आनयतु तावत्" इति आदिष्टवान्।

वेणुगोपालेन तथैव कृतम्। तान् माषान् दृष्ट्वा तृप्तिं प्रकटयन्– "एते तु समीचीनाः" इति वदन् महादेवः यावदावश्यकं तावत् माषान् नीतवान्।

तस्य निर्गमनस्य अनन्तरं वेणुगोपालः स्वामिनं नारायणगुप्तं पृष्टवान्– "आपणे स्थिताः सर्वे माषाः समानाः खलु? दक्षिणान्ते स्थितायां गोण्यां विद्यमानानां माषाणां किं वैशिष्ट्यम् आसीत्?" इति।

"वस्तुतः तु वैशिष्ट्यं किमपि न आसीत्। किन्तु केचन ग्राहकाः एवं भवन्ति यत् दालादीनां गुणस्तरभेदं किञ्चिदपि अजानन्तः अपि जानन्तः इव अभिनयन्ति। वयं वञ्चयेम इति भावयन्तः ते तथा कुर्वन्ति। अतः तैः प्रार्थिते वस्तुनि द्वित्रविधत्वं प्रदर्शितं चेत् ते तृप्त्या एकविधं वस्तु क्रीत्वा गच्छन्ति" इति उक्तवान् नारायणगुप्तः।

अन्यस्मिन् दिने अन्या घटना प्रवृत्ता। गिरीशः नाम ग्राहकः नारायणगुप्तस्य आपणम् आगतवान्। आपणे बहवः ग्राहकाः

आसन्। गिरीशः त्वरां प्रदर्शयन्– "अत्र आवल्यां लिखितानि वस्तूनि झटिति ददातु। मया त्वरया अन्यत्र गन्तव्यम् अस्ति" इति उक्तवान्।

"भवतः आगमनात् पूर्वम् आगताः अन्ये सन्ति अत्र। अतः तेभ्यः वस्तूनि दत्त्वा भवते दास्यामि। एवं त्वरा प्रदर्शिता चेत् कथम्?" इति उक्तवान् वेणुगोपालः। एतत् श्रुत्वा कुपितः गिरीशः ततः निर्गन्तुम् उद्युक्तः।

एतत् ज्ञात्वा नारायणगुप्तः– "गिरीशवर्य! बहूनां दिनानाम् अनन्तरं भवतः दर्शनम्! अये, कः कोऽत्र भोः। एकम् आसनम् आनयतु तावत्। श्रीमन्! भवान् किञ्चित् उपविशतु। वस्तूनाम् आवलीम् अत्र ददातु। अये, एतानि वस्तूनि प्रथमं सज्जीकृत्य बध्नातु" इति गिरीशं कर्मकरं च युगपत् एव उक्तवान्।

गिरीशः शान्तः अभवत्। सः कर्मकरः तु पूर्वम् आगतेभ्यः वस्तूनि दत्त्वा एव गिरीशेन सूचितानि वस्तूनि सज्जीकृतवान्। तथापि गिरीशः हसन्मुखः सन् तानि वस्तूनि स्वीकृत्य गतवान्।

ग्रहकाः यदा न आसन् तदा नारायणगुप्तं पृष्टवान् वेणुगोपालः– "श्रीमन्! गिरीशस्य व्यवहारः तु नितरां विचित्रः। उपविशतु तावत् इति मया यदा उक्तं तदा कोपेन निर्गन्तुम् उद्युक्तः सः भवता विलम्बेन एव वस्तूनि दापितानि चेदपि हसन् एव



निर्गतवान्। किमर्थम् एवम्?" इति।

"वेणुगोपाल! केचन ग्राहकाः इच्छन्ति यत् अन्येषां पुरतः स्वस्मै प्राधान्यं दातव्यम् इति। अन्येषां पुरतः मधुरैः वचनैः ते किञ्चिदिव सत्कृताः चेत् सन्तृप्ताः भवन्ति। गिरीशः अपि तादृशः एव" इति उक्तवान् नारायणगुप्तः।

कदाचित् चिदम्बरः नाम ग्राहकः वस्तूनि स्वीकृत्य 'धनं सप्ताहानन्तरं दास्यामि' इति उक्तवान्। वेणुगोपालः तं व्यवहारं गणना-पुस्तके लेखितुम् उद्युक्तः। तदा नारायणगुप्तः– "भोः, चिदम्बरार्यसदृशानां गणना पुस्तके न लेखनीया। यतः ते एव स्मृत्वा समये प्रत्यर्पयिष्यन्ति" इति वेणुगोपालम् उक्तवान्।



एतत् श्रुत्वा सन्तोषेण निर्गतवान् चिदम्बरः। तदा नारायणगुप्तः वेणुगोपालम् उक्तवान्— "तेन कियतां रूप्यकाणां वस्तूनि नीतानि इति लिखतु तावत्" इति।

तदा आश्चर्येण पृष्टवान् वेणुगोपालः— "मया तदा लेखितुम् उद्युक्तम्। भवान् मास्तु इति उक्तवान्। इदानीं वदति— लिखतु इति। किमर्थम् एवम्?" इति।

"महान् विश्वासः अस्माभिः प्रदर्श्यते इति यदा ग्राहकाः जानन्ति तदा ते अपि समये धनदानविषये आदरवन्तः भवन्ति। विश्वासं रक्षितुम् इच्छन्ति ते। किन्तु केवलविश्वासेन कदापि न व्यवहरणीयम् इति तु वाणिज्यनीतिः। ऋणरूपेण यत् दीयते तत् अवश्यं लेखनीयम्। ग्राहकः समये न ददाति चेत्, वयम् अपि न स्मरामः चेत् हानिः एव खलु? अतः लेखनीयम्" इति उक्तवान् नारायणगुप्तः।

एकस्य वर्षस्य अनन्तरं नारायणगुप्तः वेणुगोपालम् उक्तवान्— "एतावता भवता बहूनि वाणिज्यतन्त्राणि ज्ञातानि। समये समये मूल्यस्य वर्धन-न्यूनीकरणविषयं तु भवान् जानाति एव। इतोऽपि अवश्यं ज्ञातव्यः अंशः— ऋणं कथं प्रतिप्राप्तव्यम् इति। तत् ज्ञातं चेत् भवता वाणिज्यरहस्यं समग्रं ज्ञातम् इव। तदर्थम् एकं कार्यं सूचयामि। सीतारामेण शतं रूप्यकाणि दातव्यानि। भवान् गत्वा ततः तावत् धनम् आनयतु" इति।

वेणुगोपालः सीतारामस्य गृहं गत्वा द्वित्रवारं धनं पृष्टवान्। किन्तु तेन सीतारामगृहस्य कष्टानि केवलं ज्ञातानि, धनं तु न प्राप्तम्। एतावदेव न, ऋणे अप्रत्यर्पिते अपि, पुनरपि वस्तूनि क्रेतुम् आपणम् आगतवान् सीतारामः। तदा वेणुगोपालः किञ्चिदिव कोपेन— "पूर्वतनम् ऋणं यावत् न प्रत्यर्पते तावत् पुनरपि ऋणरूपेण वस्तूनि दातुं न शक्यन्ते" इति उक्तवान्।

तदा तत्रैव स्थितः नारायणगुप्तः— "सीतारामवर्य! कुशलं वा? वस्तूनि नेतुम् आगतं वा? यावत् आवश्यकं तावत् नयतु। अद्य भवता ऋणं न प्रत्यर्पितं स्यात्, तथापि सद्यः एव प्रत्यर्पयिष्यति एव। अतः चिन्ता नास्ति। श्रीमन्! मया श्रुतं यत् पुत्र्याः निमित्तं

वरः निश्चितः इति। सत्यं खलु एतत्? इदानीं यावत् ऋणं प्रत्यर्पणीयं तावत् अचिरात् प्रत्यर्पितं चेत् पुत्र्याः विवाहनिमित्तम् अपेक्षितानि वस्तूनि पुनरपि ऋणरूपेण नेतुं शक्यन्ते खलु?" इति उक्तवान्।

नारायणगुप्तस्य वचनैः वशीकृतः सीतारामः सप्ताहाभ्यन्तरे ऋणं समग्रतया प्रत्यर्पितवान्। अपेक्षितानि वस्तूनि धनं दत्त्वैव नीतवान् च।

अन्यस्मिन् दिने सः स्व पुत्र्याः विवाहस्य निमित्तम् अपेक्षितानि वस्तूनि ऋणरूपेण नेतुं नारायणगुप्तस्य आपणम् आगतवान्। तदा नारायणगुप्तः मधुरया शैल्या उक्तवान्— "श्रीमन्! एषु दिनेषु मम वाणिज्यं सम्यक् न प्रचलति। अतः इदानीम् ऋणरूपेण वस्तूनि दातुं न शक्नोमि। कृपया क्षन्तव्यः अहम्। इदानीम् अन्यस्मात् आपणतः वस्तूनि नयतु। पुनः यदा मम स्थितिः उत्तमा भविष्यति तदा भवन्तं सूचयिष्यामि" इति।

अनन्योपायः सीतारामः म्लानवदनः सन् ततः निर्गतवान्।

एतत् सर्वम् आश्चर्येण पश्यन्तं वेणुगोपालम् उक्तवान् नारायणगुप्तः— "वस्तुतः सीतारामस्य धनक्लेशः तावान् नास्ति। तथापि विना क्लेशम् ऋणं प्राप्यते इत्यतः सः धनदाने औदासीन्यं प्रकटयति। एतत् जानन् अहम् उपायेन ऋणं प्रतिप्राप्तवान्। अग्रे कथं व्यवहरणीयम् इति सूच्यरूपेण उक्तवान् च" इति।

केषाञ्चित् दिनानाम् अनन्तरं नारायणगुप्तः वेणुगोपालम् उक्तवान्— "भवता एतावता सर्वाणि वाणिज्यरहस्यानि ज्ञातानि। पित्रा क्रियमाणं वाणिज्यं भवान् एव इतः परं स्वतन्त्रतया निर्वोढुं शक्नोति" इति।

नारायणगुप्तं कृतज्ञतापूर्वकं नमस्कृत्य ततः निर्गतः वेणुगोपालः गृहम् आगत्य पित्रा क्रियमाणं वाणिज्यं स्वयं निर्वोढुम् आरब्धवान्। न्याय्येन मार्गेण लाभं सम्पादयन् वाणिज्यं विस्तार्य पितरं सन्तोषितवान् सः।



# वञ्चनाचातुर्यम्

कश्चन सर्वकारीयकार्यालयः। सन्दर्शने उत्तीर्णः प्रदीपः तत्र नियुक्तः अभवत्। यस्मिन् दिने ऐदम्प्राथम्येन प्रदीपः कार्यालयं गतवान् तस्मिन् एव दिने तारकेशः नाम तत्रत्यः उद्योगी प्रदीपस्य समीपम् आगत्य उक्तवान्– "मित्र! भवान् नूतनः। अत्रत्यैः जनैः सह जागरूकतया व्यवहरणीयं भवता। यः कोऽपि धनम् ऋणरूपेण पृच्छति चेत् अविचार्य मा ददातु। धनम् ऋणरूपेण दत्तं चेत् प्रतिप्राप्तौ महान् विलम्बः स्यात् एव। अतः जागरूकः भवतु" इति।

एतदनन्तरं प्रदीप-तारकेशयोः मैत्री प्रवृद्धा। मासः समाप्तः। प्रथमं मासिकवेतनं प्राप्तवान् प्रदीपः। किन्तु ततः सप्ताहः अतीतः चेदपि कोऽपि तम् ऋणं न प्रार्थितवान्।

कदाचित् प्रदीपः तारकेशः च विपणिं गतवन्तौ। तारकेशः वस्तूनि क्रीतवान्। आपणिकाय दातुं कोषतः धनं निष्कासितवान्। किन्तु तत्र वस्तूनां मूल्यं यावत् भवति ततोऽपि पञ्चाशत् रूप्यकाणि न्यूनानि आसन्। अतः तारकेशः प्रदीपम् उक्तवान्– "मित्र! धनं कियत् अस्ति इति अपरीक्ष्य वस्तूनि क्रीतानि मया। मम कोषे तु धनं न्यूनम् अस्ति। अतः इदानीं भवान् मह्यं पञ्चाशत् रूप्यकाणि ददातु। श्वः प्रातः कार्यालये तत् प्रत्यर्पयिष्यामि" इति।

एतत् अङ्गीकृत्य प्रदीपः तारकेशाय धनं दत्तवान्। ततः मासः अतीतः चेदपि तारकेशः ऋणं न प्रत्यर्पितवान्। अतः प्रदीपः एव तारकेशं पृष्टवान्– "धनं कदा प्रत्यर्पयति?" इति।

तदा तारकेशः उक्तवान्– "यस्मिन् दिने भवान् एतं कार्यालयम् आगतः तस्मिन् एव दिने अहम् उक्तवान् आसं खलु – एतत्कार्यालयीयाय ऋणं दत्तं चेत् प्रतिप्राप्तिः तु महता विलम्बेन इति। पुनः किमर्थं त्वरां प्रदर्शयति? तिष्ठतु तूष्णीम्। यदा मम हस्ते धनं सञ्चितं भविष्यति तदा दास्यामि" इति।





# अपूर्वस्य साहसगाथा

## ९

(लुण्ठकानां बन्धनात् पञ्च बालकान् रक्षितवान् समीरः। अत्र अपूर्वः मार्गदर्शकः आसीत्। अनन्तरम् अपूर्वः, समीरः, पञ्च तत्स्नेहिताः च निधिप्राप्त्यर्थं नौकाम् आरुह्य शिलाद्वीपं गतवन्तः। तत्र सुरापानेन मूर्च्छां गताः आसन् लुण्ठाकाः। अपूर्वसमीरादयः नौकायां स्थापितया सम्पत्त्या सह शिलाद्वीपतः प्रतिप्रस्थितवन्तः। तदनन्तरम्.....)

नौकायाम् उपविष्टाः बालकाः तीरस्य समीपम् आगतवन्तः। 'समुद्रचोरान् राजाधीनान् कृत्वा राज्ञः प्रशंसां प्राप्य समीरः मित्रैः सह कस्यापि कार्यविशेषस्य निमित्तं कुत्रापि गतः' इति वार्ता सर्वत्र प्रसृता आसीत्। अतः बहवः ग्रामीणाः समुद्रतीरे एकत्रिताः आसन्।

'बालाः किमर्थं गताः स्युः?' इति सर्वे चिन्तयन्ति। एकैकः अपि स्वमत्यनुगुणम् एकैकं कारणं वदति। कश्चित् वदति– 'अपूर्वं स्थलं द्रष्टुं गतवन्तः स्युः ते' इति। अपरः वदति– 'कस्यचित् नौकानायकस्य मैत्रीं सम्पादितवन्तः स्युः ते। अतः समुद्रविहारार्थं गताः स्युः' इति। अन्यः वदति– 'तथा न स्यात्। किमपि अपूर्वं वस्तु अस्ति इति तैः श्रुतं दृष्टं वा स्यात्। अतः तस्य



आनयनार्थं ते गताः स्युः' इति। पुनः अन्यः वदति– 'अपूर्वस्य वस्तुनः आनयनार्थं न गताः ते। अल्पवयस्कानां बालानां तावत् सामर्थ्यं कथम्?' इति। इतरः वदति– 'बालानां सामर्थ्यम् अल्पम् इति मा चिन्तयतु भवान्। लुण्ठाकान् एव ते राजाधीनान् कृतवन्तः। अतः तेषाम् अपूर्वं सामर्थ्यम् अस्ति एव। यत्किमपि साधयितुं समर्थाः ते' इति।

आगच्छन्तीं नौकां दूरात् एव दृष्ट्वा जनाः उत्साहेन सन्तोषेण च उक्तवन्तः– "समीरः आगतः। तेन सह तन्मित्राणि अपि सन्ति" इति। एतां वार्तां सर्वत्र प्रसारयितुं केचन ग्रामं प्रति धावितवन्तः।

सागरतीरे एकं सुन्दरम् उपवनं, तत्र सुन्दरं भवनं च आसीत्। विश्रान्त्यर्थं राजा कदाचित् अत्र आगत्य तिष्ठति स्म। इदानीम् अपि राजा अत्र आसीत्। तेनापि श्रुतम् आसीत् यत् साहसशीलाः बालकाः समुद्रमार्गेण कुत्रापि गत्वा प्रत्यागच्छन्तः सन्ति इति। एतेषु बालकेषु, तत्रापि समीरे, राज्ञः विशेषप्रीतिः आसीत्। अतः सोऽपि तेषां दर्शने समुत्सुकः आसीत्।

राजा अश्वम् आरुह्य समुद्रतीरम् आगतवान्। तस्य पृष्ठतः रक्षकभटाः आसन्। बालकानां मातापितरः बन्धुगणाः च एतावता एव तीरे उपस्थिताः आसन्। एते सर्वे राजानं दृष्ट्वा आदरेण नमस्कृतवन्तः।

"एते बालकाः कस्य कार्यस्य निमित्तम् इतः गताः इति भवन्तः किमपि जानन्ति वा?" इति जनान् पृष्टवान् राजा।

"न जानीमः प्रभो।" इति सविनयम् उक्तवन्तः जनाः।

नौकायाम् उपविष्टः अपूर्वः ज्ञातवान् यत् तीरे ग्रामीणाः राजा च प्रतीक्षां कुर्वन्तः सन्ति इति। अतः सः समीरम् उक्तवान्– "मित्र! पुनः मिलामः। भवान् राजानं वदतु यत् एतस्याः सम्पत्तेः उपयोगः निर्धनानां प्रजानां हितार्थम् एव करणीयः इति। चोरेभ्यः वशीकृतायाः एतस्याः सम्पत्तेः स्वामी वस्तुतः कोऽपि नास्ति। अतः एतत् धनं कोषागारे न स्थापनीयम्। निर्धनानां हितार्थम् एव एतस्य उपयोगः भवेत्। तदा एव सार्थकता" इति।

समीरः अपूर्वं भक्त्या नमस्कृतवान्। अपूर्वस्य वियोगः आसन्नः इति तदीयं मनः खिन्नम् आसीत्। एतत् जानन् अपूर्वः उक्तवान्– "मित्र! धैर्येण तिष्ठतु। सर्वं मङ्गलमयं भविष्यति। ऐश्वर्यं प्राप्तम् इत्यतः सन्तोषे निमग्नः भवान् शिलाद्वीपस्थान् मूर्च्छितान् चोरान् मा विस्मरतु। तथैव परित्यक्ताः चेत् ते मरणं प्राप्नुयुः। राजानं निवेदयतु यत् ते रक्षणीयाः इति" इति।

एतावत् उक्त्वा नौकायाः पार्श्वे स्थितस्य गण्डमीनस्य उपरि उत्प्लुत्य उपविष्टवान् अपूर्वः। वेगेन गच्छन् गण्डमीनः अपूर्वं ततः दूरम् अनयत्। क्षणाभ्यन्तरे अपूर्वः अदृश्यतां गतः।

सागरनदीसङ्गमस्थले नौका आगता। तत्र तरङ्गाः न्यूनाः आसन्। जलं प्रशान्तम् आसीत्। दृढकायाः केचन ग्रामीणाः जले अवतीर्य बालान् तीरं प्रापितवन्तः।

समीरः राजानं विनयेन नमस्कृत्य कथम् एतत् ऐश्वर्यं प्राप्तम् इति विस्तरेण निवेदितवान्।

राजा नौकासमीपं गत्वा सर्वं परिशीलितवान्। तत्र महापेटिकासु अनर्घ्याणि आभरणानि सुवर्णमुद्राः च आसन्। एतत्सर्वं दृष्टवतः महाराजस्य महदाश्चर्यम् आनन्दश्च।

समीरस्य प्रार्थनाम् अङ्गीकुर्वन् राजा उक्तवान् यत् निर्धनानां जनानां साहाय्यार्थम् एव एतस्याः सम्पत्तेः उपयोगः क्रियते इति।





"ते तत्रैव परित्यक्ताः चेत् का हानिः? तेषां विषये अस्माभिः किमर्थं तावत् चिन्तनीयम्?" इति पृष्टवान् राजा।

"तथा कृतं चेत् ते तत्रैव मरणं प्राप्नुयुः। यद्यपि ते चोराः, तथापि तेषां तादृशं दुर्मरणं न उचितम्। प्रभो, भवान् तु दयालुः। तेषां विषये अल्पा दया प्रदर्शनीया भवता" इति उक्तवान् समीरः।

"ते अत्र आनीताः चेदपि तेषां मरणं तु निश्चितम् एव। तैः निरपराधिनः असङ्ख्याः जनाः मारिताः पीडिताः च। अनेके परिवाराः तैः उन्मूलिताः च। अतः तेषां मरणदण्डनम् एव उचितः दण्डः" इति उक्तवान् राजा। एतत् श्रुतवतः समीरस्य मुखं म्लानं जातम्।

राजा एतदपि उक्तवान् यत् निर्धनानां साहाय्यं केन रूपेण कर्तुं शक्यः इति भवान् अपि सूचयतु इति।

"प्रभो, एषा सम्पत्तिः अत्रैव विश्रान्तिगृहे एव सुरक्षितं स्थापिता चेत् वरं भवेत्" इति सूचितवान् समीरः।

"अस्तु तावत्" इति अङ्गीकारं सूचितवान् राजा।

"अन्यदपि किञ्चित् निवेदनीयम् अस्ति प्रभो" इति उक्तवान् समीरः।

"किं तत्?" इति पृष्टवान् राजा।

"शिलाद्वीपे मूर्च्छावस्थायां स्थिताः लुण्ठाकाः अत्र आनेतव्याः" इति निवेदितवान् समीरः।

राजा अपि एतत् लक्षितवान् एव। अपूर्वं निधिम् आनीतवन्तं समीरं खेदयितुं न इच्छति सः। अतः सः– "अस्तु तावत्। भवतः प्रार्थनां पुरस्कृत्य तान् अत्र आनेष्यामि। अनन्तरं यथायोग्यं दण्डनं चिन्तयिष्यामि" इति उक्त्वा अङ्गरक्षकान् आहूय राजधानीं प्रति वार्तां प्रेषितवान् यत् लुण्ठाकानाम् आनयनार्थं योग्या व्यवस्था करणीया इति।

राजाज्ञायाः अनुगुणं सम्पत्तिः विश्रान्तिभवने सुरक्षितं स्थापिता।

प्रातःकाले पञ्चाशत्सैनिकैः सहिते द्वे नौके प्रयाणार्थं सिद्धे जाते। मार्गं प्रदर्शयितुं समीरः तन्मित्राणि च लुण्ठाकतः या नौका वशीकृता तस्यां नौकायाम् उपविष्टवन्तः। समर्थाः

नाविकाः तां चालयन्तः आसन्। सैनिकानां नौकाद्वयं समीरनौकाम् अनुसृत्य शिलाद्वीपं प्रति अगच्छत्।

यदा तैः शिलाद्वीपः प्राप्तः तदा उषःकालः आसीत्। नौका कुत्र स्थगनीया इति सूचितवान् समीरः। यत्र नौकाः स्थिताः ततः अनतिदूरे एव राक्षसाकारकाः भीतिजनकाः महाशिलाः आसन्।

अकस्मात् कश्चन शिलाखण्डः वेगेन आगतः भटनायकस्य पार्श्वे अपतत्। ततः आत्मानं रक्षन् भटनायकः– "ते मूर्खाः अस्मान् सम्मुखीकुर्वन्तः सन्ति" इति वदन् शिलानां मध्ये तिष्ठन् पुनः उच्चस्वरेण चोरान् उद्दिश्य उक्तवान्– "भो भोः, भवन्तः यावत् प्रयत्नं कुर्वन्ति चेदपि भवतां बन्धनं तु भविष्यति एव। भवन्तः पञ्च एव सन्ति। वयं पञ्चाशत् स्मः। यदि भवन्तः स्वयम् आत्मसमर्पणं कुर्युः तर्हि दण्डे न्यूनता भवेत्। विरोधः आचरितः चेत् शूलारोपणं तु निश्चितम् एव" इति।

एतदनन्तरम् अपि लुण्ठाकाः वेगेन शिलाखण्डान् क्षिप्तवन्तः। शिलाखण्डप्रहारः क्षणे क्षणे प्रवृद्धः।

"हुँ... बाणप्रहारं कुर्वन्तु" इति आदिष्टवान् भटनायकः।

भटाः लुण्ठाकान् उद्दिश्य बाणवर्षणं कृतवन्तः। तदा तु शिलाखण्डक्षेपणं स्थगितम्। नौकास्थाः भटाः शिलाद्वीपं प्राप्तवन्तः।

भटनायकः समीरम् उक्तवान्– "भवान्,





भवतः मित्राणि च नौकायाम् एव तिष्ठन्तु। तेषां लुण्ठाकानां दृष्टिगोचराः मा भवन्तु। वयं तान् दुष्टान् गृहीत्वा आनेष्यामः" इति।

अनन्तरं भटनायकः नौकातः अवतीर्णः। सः पुनरपि लुण्ठाकान् उद्दिश्य उक्तवान् यत् आत्मसमर्पणं करणीयम् इति। लुण्ठाकानां पक्षतः काऽपि प्रतिक्रिया न आगता।

भटाः उन्नताः शिलाः आरुह्य परितः दृष्टिं प्रसारितवन्तः। किन्तु तैः तस्मिन् द्वीपे कोऽपि न दृष्टः।

"ते भीरवः लुण्ठाकाः अस्मत्तः भीताः सन्तः कुत्रापि गुहायां लीनाः स्युः" इति वदन् भटनायकः दश भटान् द्वीपरक्षणकार्ये नियोजितवान्। अवशिष्टान् भटान् लघुगणेषु विभज्य आदिष्टवान् यत् सर्वासु गुहासु अन्वेषणं करणीयम् इति।

समीरः तत्स्नेहिताः च नौकायाम् उपविश्य भटानां व्यवहारं कुतूहलेन पश्यन्तः आसन्।

"समीर!" इति मृदुमधुरम् आह्वानं श्रुत्वा समीरः क्षणकालम् आश्चर्यचकितः। तस्यां दिशि दृष्टिं प्रसारितवान् सः।

"ते लुण्ठाकाः एतस्मिन् द्वीपे पूर्वस्यां दिशि गुहायां निलीय स्थिताः सन्ति। भवान् भटनायकम् एतम् अंशं सूचयित्वा अविलम्बेन तं तत्र नयतु" इति उक्तवान् अपूर्वः।

समीरः महता उत्साहेन नौकातः अवतीर्य भटनायकस्य समीपं गतवान्।

"नौकायाम् एव तिष्ठतु इति खलु मया उक्तम्? अत्र आगमनम् अपायकरम्। अतः भवान् नौकायां तिष्ठतु" इति उक्तवान् भटनायकः।

"भवतः वचनम् अङ्गीकृतं मया। किन्तु एकं विशेषविषयं सूचयितुम् अहम् अत्र आगतः। ते पञ्च लुण्ठाकाः पूर्वस्यां दिशि गुहायां निलीय स्थिताः सन्ति। अतः तान् ग्रहीतुं भटान् प्रेषयितुम् अर्हति भवान्" इति सूचितवान् समीरः।

"एतत्सर्वं भवता कथं ज्ञातम्?" इति आश्चर्येण पृष्टवान् भटनायकः।

'येन क्रमेण पूर्वं शिलाद्वीपः अन्विष्टः, येन

च क्रमेण सम्पत्तिः प्राप्ता, तेनैव क्रमेण एषा वार्ता अपि प्राप्ता" इति मन्दहासपूर्वकम् उक्तवान् समीरः।

"किं दिव्या शक्तिः काऽपि अस्ति वा भवतः, येन भवान् सर्वं क्षणमात्रेण ज्ञातुं शक्नुयात्?" इति पृष्टवान् भटनायकः।

"एतां जिज्ञासाम् अनन्तरं प्रदर्शयतु। प्रथमं लुण्ठाकानां ग्रहणं चिन्तनीयम्। मया सूचिते स्थले पश्यतु। अवश्यं ते तत्रैव सन्ति" इति उक्तवान् समीरः।

'समीरः सत्यम् एव वदन् अस्ति' इति अवगतवान् भटनायकः। अतः सः दश भटान् तस्याः गुहायाः समीपं प्रेषितवान्, या च समीरेण सूचिता।

स्वयम् अपि गुहायाः समीपं गत्वा पुनः उच्चस्वरेण उक्तवान् भटनायकः– "भोः, इदानीं वा आत्मसमर्पणं कुर्वन्तु। अन्यथा मरणं निश्चितं भवताम्" इति।

"मरणम्! केषां मरणम्? तत् तु कालः एव निश्चिनोति। भवत्सु कोऽपि गुहासमीपम् आगच्छति चेत् तस्य तु मरणं निश्चितम्। जागरूकाः भवन्तु" इति उच्चस्वरेण उक्तवान् लुण्ठाकनायकः।

अत्रान्तरे गुहायाः पृष्ठभागतः घोरः ध्वनिः श्रुतः– "अत्र गुहायां घोराः विषसर्पाः सन्ति। भवन्तः अत्र इतः परं क्षणकालं तिष्ठन्ति चेदपि ते सर्पाः भवतः दशन्ति। भवन्तश्च मरणं प्राप्नुवन्ति। हुँ, निर्गच्छन्तु इतः। अन्यथा घोराः सर्पाः फूत्कुर्वन्तः आगमिष्यन्ति। धावन्तु इतः" इति।

विषसर्पवार्तां, घोरम् अज्ञातध्वनिं च श्रुत्वा भीताः अभवन् लुण्ठाकाः। 'गुहायां कोऽपि घोरपिशाचः अस्ति इति भाति' इति चिन्तयन्तः ते कम्पमानाः गुहातः बहिः आगतवन्तः।

"वयम् आत्मसमर्पणं कुर्वन्तः स्मः" इति वदन् हस्तौ उन्नीय अग्रे आगतवान् लुण्ठाकनायकः। अन्ये लुण्ठाकाः अपि हस्तौ उन्नीय अग्रे आगतवन्तः। भटाः तान् सर्वान् बद्धवन्तः। –(अनुवर्तते)






# राज्यभारनिर्वहणम्

सर्वैः राजलक्षणैः युक्तः राजा त्रिविक्रमः पुनरपि वृक्षस्य समीपम् आगत्य वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगत्य यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! भवान् राजलक्षणैः युक्तः इत्यत्र नास्ति सन्देहः। किन्तु राजलक्षणैः युक्तस्य अभिज्ञाने अपि किं भवान् समर्थः? मध्यरात्रे श्मशानमार्गे शववहनं यथा सलीलं क्रियते तथा राजलक्षणयुक्तस्य अभिज्ञानं सलीलं कर्तुं न शक्यते। पूर्वम् उषानामिका काष्ठविक्रेतुः पुत्री कश्चित् राजलक्षणोपेतः अयम् इति विचिन्त्य चितवती। किन्तु तया यः चितः सः तादृशः न आसीत् इति मम अभिप्रायः। उषायाः कथां श्रावयामि। तया यत् चयनं कृतं तत् समीचीनम् आसीत् उत न इति भवान् एव वदतु" इति।

## वेतालकथा



अनन्तरं वेतालेन कथा आरब्धा–

परिणतिपुरनामकस्य ग्रामस्य समीपे स्थिते अरण्ये रामधनः नाम काष्ठविक्रेता निवसति स्म। तस्य एकमात्रपुत्री उषा। यदा उषा अल्पवयस्का आसीत् तदा एव तस्याः माता दिवङ्गता आसीत्।

पिता रामधनः एव तां प्रीत्या पोषितवान्। सर्वान् सदाचारान् पाठितवान् च। दिनेषु गच्छत्सु सा गृहकार्येषु कुशला जाता। कालक्रमशः सा गृहनिर्वहणभारं स्वयं निर्वोढुं समर्था जाता। सा सर्वदा अपि गृहं सुव्यवस्थितं स्थापयति स्म। विद्यमानैः एव वस्तुभिः गृहं रमणीयतया अलङ्करोति स्म। वस्तूनि किञ्चिदपि व्यर्थम् अकुर्वती रुचिकरं पाकं सज्जीकरोति स्म सा। एवं तस्याः नैपुण्यकारणतः अल्पाकारकम् अपि गृहं विशेषकान्त्या शोभते स्म।

उषायाः गृहम् अरण्यस्य एकस्मिन् पार्श्वे अस्ति। तस्यैव अरण्यस्य अपरपार्श्वे तस्याः मातामह्याः गृहम् अस्ति। मातामहः दिवङ्गतः इत्यतः सा मातामही एकाकिनी एव गृहे निवसति स्म।

कदाचित् रामधनः भोजनसमये पुत्रीम् उक्तवान्– "वत्से! चिरकालात् भवत्या मातामही न दृष्टा खलु? वृद्धा सा कथम् अस्ति इति न ज्ञायते। कदाचित् भवत्या कुतो वा तत्र गत्वा न आगन्तव्यम्?" इति।

"किन्तु मम गमनेन भवतः क्लेशः भवेत् खलु? अतः एव चिन्ता मम" इति उक्तवती उषा।

"न कोऽपि क्लेशः मम। कानिचन दिनानि अहं पाकादिकं कर्तुं शक्नुयाम् एव। अतः भवती निश्चिन्ततया गच्छतु। प्रत्यागमने काऽपि त्वरा मास्तु। भवती कानिचन दिनानि तिष्ठति चेत् सा अपि नितरां सन्तुष्टा भवेत् " इति उक्तवान् रामधनः।

अनन्तरदिने उषा यदा गृहतः प्रस्थिता तदा तया पालिताः सर्वे पक्षिणः कलरवं कुर्वन्तः ताम् अनुसृतवन्तः। उषा प्रयत्नेन तान् निवार्य मैनापक्षिणा सह ततः प्रस्थितवती।

यदा तया मातामहीगृहं प्राप्तं तदा सायङ्कालः उपस्थितः आसीत्। तया निवारितौ अपि एकः दार्वाघाटः एकः चटकः

च ताम् अनुसृतवन्तौ आस्ताम्।

मातामही यावानलरोटिकां सज्जीकुर्वती आसीत्। मैनापक्षी मन्दम् अन्तः गत्वा जलघटस्य उपरि उपविश्य– "अम्ब, अम्ब! वयम् अतिथयः समागताः स्मः। पञ्च रोटिकाः अधिकतया सज्जीकरणीयाः भवत्या" इति अवदत्।

मैनापक्षिणः सम्भाषणसामर्थ्यं ज्ञात्वा एव मातामही स्वदौहित्र्याः पक्षिप्रियतां स्मरन्ती तस्याः आगमनं तर्कितवती। अतः सा महता सन्तोषेण उत्थाय– "आगच्छतु वत्से, आगच्छतु। एतां वृद्धां मां द्रष्टुम् आगता वा भवती? अद्य सुदिनं मम। आगच्छतु अन्तः" इति वदन्ती प्रीत्या आलिङ्ग्य शिरसि आघ्राय अन्तः उपवेशितवती।

"कथम् अस्ति भवत्याः पिता? गृहे सर्वं कुशलं खलु?" इति पृष्टवती मातामही।

"सर्वं कुशलम्। पिता अपि कुशली एव। सः एव माम् अत्र प्रेषितवान्। 'यावत् इच्छति तावन्ति दिनानि स्थित्वा आगच्छतु। अत्यत्रव्यवस्थायाः चिन्तां मा करोतु' इति उक्त्वा मां प्रेषितवान् सः" इति सन्तोषेण उक्तवती उषा।

"अहो, महान् सन्तोषः! भवती तु नितरां प्रवृद्धा दृश्यते। पित्रा वरान्वेषणं किमपि क्रियमाणम् अस्ति वा? भूरिभोजनम् अचिरात् एव प्राप्स्यामः वा वयम्? अथवा भवती एव कञ्चित् प्रियतमम् अन्विष्टवती वा?" इति



हसन्ती पृष्टवती मातामही।

"अम्ब! अलं परिहासेन। विवाहविषयः इतोऽपि मम मनसि एव न प्रविष्टः। भवत्याः कथनं श्रुतं चेत् मम भासते यत् भवती कस्मैचित् कृष्णमुखाय वानराय, विकृताकाराय भल्लूकाय वा मां दातुं सिद्धा इति" इति मन्दहासपूर्वकम् उक्तवती उषा।

अनन्तरम् उषा गृहस्य प्रकोष्ठादिभागं परिशील्य मातामहकालीनान् त्रीन् मञ्चान प्रकोष्ठे स्थापितान् दृष्ट्वा आश्चर्येण मातामहीं पृष्टवती– "अम्ब! एते प्राचीनाः त्रयः मञ्चाः किमर्थम् अट्टात् अधः अवतारिताः?" इति।

तदा मातामही– "सा च महती कथा। भवती हस्तपादादिकं प्रक्षाल्य भोजनार्थम्



आगच्छतु। तां कथाम् अनन्तरं विस्तरेण श्रावयामि" इति उक्तवती।

हस्तपादादिकं प्रक्षाल्य मुखमार्जनादिकं कृत्वा भोजनार्थम् उपविष्टवती उषा। आत्मना सह आगतेभ्यः पक्षिभ्यः अपि रोटिकाखण्डं यच्छन्ती स्वयं च खादन्ती मातामह्या उक्तां कथां श्रुतवती सा।

मातामह्या एवं कथा उक्ता– "एतस्य देशस्य राज्ञः राजसिंहस्य पत्नी त्रीन् शिशून् युगपत् प्रसूय दिवङ्गता। ते त्रयः पुत्राः प्राप्तवयस्काः जाताः। तेषां च नाम– जयः अजयः विजयः च इति। ते विद्याभ्यासं समाप्य स्वेच्छया अटन्तः दिनानि यापयन्ति स्म। राजकार्येषु अल्पाम् अपि आसक्तिं न प्रदर्शयन्ति स्म।

एतत् जानन् राजा तान् त्रीन् उक्तवान् यत् यः प्रथमं विवाहितः भवति तस्मै राज्यं दीयते इति। विवाहेच्छया वा पुत्राः राजकार्येषु आसक्ताः भवेयुः इति राज्ञः विचारः। किन्तु राजकुमाराः विवाहविषये अपि अनासक्ताः। सर्वदेशीयाः राजकुमार्यः अपि तैः निराकृताः आसन्। अन्ते अनन्योपायः राजा पुत्रान् उक्तवान्– "अनुरूपायाः वध्वाः अन्वेषणं भवन्तः एव स्वयम् कुर्वन्तु। यः प्रथमं विवाहितः भवति सः एव राज्यं प्राप्स्यति इति तु स्मरन्तु" इति।

अनुरूपायाः वध्वाः अन्वेषणस्य व्याजेन राजकुमाराः प्रतिदिनं प्रासादात् निर्गत्य अरण्यम् आगमिष्यन्ति। मम गृहे एव विश्रान्तिं स्वीकुर्वन्तः चतुरङ्गक्रीडादिभिः समयं यापयन्ति। मध्याह्ने निद्रा अपि अत्रैव। सायं ते प्रतिगच्छन्ति" इति।

"अहो, एवं वा कथा! तेषां कृते पाकसज्जीकरणात् एव इति भाति– भवती नितरां कृशा जाता" इति उक्तवती उषा।

"कुत्र कृशता? एषु दिनेषु स्थूला जाता अस्मि। ते प्रतिदिनं स्वस्य आहारं स्वयम् आनेष्यन्ति। तैः यत् आनीयते तदेव खाद्यते मया। अतः तेषाम् आगमनतः तु पाकसज्जीकरणक्लेशः एव नास्ति मम" इति उक्तवती मातामही।

"अस्तु तावत्। निद्रा मां बाधते। श्वः अन्यान् विषयान् श्रोष्यामि" इति उक्त्वा ततः

उत्थाय एकस्य मञ्चस्य उपरि शयनं कृतवती उषा।

मञ्चे शयाना उषा अल्पाम् अपि निद्रां न प्राप्तवती। यतः तस्मिन् मञ्चे बहवः मत्कुणाः आसन्। मत्कुणदंशनतः पीडाम् अनुभवन्ती उषा कथमपि रात्रिं यापितवती।

प्रातः उत्थाय उषा मातामह्याः समीपं गत्वा उक्तवती– "अम्ब! एतेषु मञ्चेषु ये शयनं कुर्वन्ति ते वस्तुतः राजकुमाराः एव, उत रूक्षाः अटविकाः राक्षसाः? मत्कुणबाधां सहमानाः ते कथम् अत्र प्रतिदिनं शयनं कुर्वन्ति इत्येव आश्चर्यं मम" इति।

"राज्यभारवहनकष्टस्य अपेक्षया अपि मत्कुणपीडासहनम् एव वरम् इति तैः चिन्तितं स्यात्" इति हसन्ती उक्तवती मातामही।

स्वामिनी उषा रात्रौ निद्रां न प्राप्तवती इति जानन् मैनापक्षी मत्कुणनाशनार्थं दार्वाघाटं नियोजितवान्। मृदुलाभिः सस्यत्वग्भिः वयनं कृत्वा मञ्चं मृदुलं करोतु इति चटकं सूचितवान् चापि।

घण्टात्रयाभ्यन्तरे दार्वाघाटः चटकः च स्वकार्यं समापितवन्तौ।

अत्रान्तरे ऊर्णनाभजालादिकम् अपनीय उषा गृहं सम्मार्ज्य स्वच्छीकृतवती। उद्यानतः पुष्पाणि आनीय पुष्पैः मालाभिः च गृहं सम्यक् अलङ्कृतवती। वृद्धायाः गृहं नावीन्यं प्राप्य अशोभत।

मध्याह्नसमये ते त्रयः राजकुमाराः अश्वस्य उपरि उपविश्य तत्र आगतवन्तः।





तेषाम् आगमनं दूरात् एव जानन् मैनापक्षी– "आर्ये, ते स्थूलकायाः सण्डाः आगताः। भवती पृष्ठतः प्रकोष्ठे निलीय तिष्ठतु" इति अवदत्।

उषा तथैव निलीय स्थितवती। राजकुमाराः अश्वात् अवतीर्य आश्चर्येण परितः पश्यन्तः– "कथम् एतत्! गृहस्य अपूर्वा शोभा! अवर्णनीयं सौन्दर्यम्! कया देवतया एवं कृतम्?" इति वृद्धां पृष्टवन्तः।

"न कयापि देवतया एतत् कृतम्। मम दौहित्री चिरकालानन्तरम् अत्र आगता। तया कृतम् एतत्सर्वम्" इति उक्तवती वृद्धा।

"एवं वा! अपूर्वं कौशलं तस्याः! प्राचीनस्य गृहस्य एतस्य शोभां मायया इव शतगुणितं वर्धितवती सा अस्माभिः अवश्यं द्रष्टव्या" इति उक्तवन्तः राजकुमाराः।

"अस्माकं राजकुमारीं सौभाग्यशालिनः केवलं पश्यन्ति। सर्वैः सर्वदा सा द्रष्टुं न शक्या" इति अवदत् मैनापक्षी।

मैनापक्षिणः मधुरध्वनिं श्रुत्वा त्रयः अपि राजकुमाराः नितराम् आश्चर्यचकिताः।

वृद्धा हसन्ती तैः आनीतम् आहारस्यूतम् अन्तः नीत्वा उषायै दत्तवती। उषा तेषाम् आहारवस्तूनां रुचिं किञ्चित् आस्वाद्य राजकुमाराणां निमित्तं रागीधान्येन खाद्यपिण्डं निर्माय मातामहीद्वारा प्रेषितवती।

रागीपिष्टपिण्डम् अद्यावधि न दृष्टम् आसीत् राजकुमारैः। ते एतस्य रुचिम् आस्वाद्य– "अहो रुचिः! राजभवने एतादृशं खाद्यं कदापि न निर्मीयते एव" इति सन्तोषेण उक्तवन्तः।

तदा मैनापक्षी अवदत्– "अस्माकं स्वामिनी उषा एतादृशानि बहूनि रुचिकराणि खाद्यानि निर्मातुं शक्नोति" इति।

"एवं वा! अस्मदर्थं तया खाद्यं निर्मितं यत् तदर्थं कृतज्ञाः वयम्। कुत्र सा?" इति पृष्टवान् भोजनप्रियः विजयः।

"सुमुहूर्ते केवलं सा द्रष्टुं शक्या, न अन्यदा" इति साभिमानम् अवदत् मैनापक्षी।

राजकुमाराः सायं राजधानीं प्रतिगतवन्तः। अनन्तरदिने मध्याह्नसमये यथापूर्वं वृद्धायाः गृहं प्रति आगतवन्तः।

तत्समये उषा मन्दस्वरेण गायन्ती पुष्पसङ्ग्रहं कुर्वती आसीत्।

उषायाः अपूर्वं सौन्दर्यं दृष्ट्वा, तस्याः सुमधुरं गानं श्रुत्वा च व्यामुग्धाः राजकुमाराः– "अहो, मधुरः कण्ठः! अहो, मधुरा आकृतिः!" इति आश्चर्यं प्रकटितवन्तः।

राजकुमाराणाम् आगमनं ज्ञात्वा उषा झटिति गृहं प्रविष्टवती। अनन्तरं तेषु एकैकः अपि अन्यः यथा न जानीयात् तथा वृद्धायाः समीपम् आगत्य– "अम्ब! भवत्याः दौहित्रीम् अहं परिणेतुम् इच्छामि" इति अवदत्।

"उषा यद्यपि मम दौहित्री, तथापि सा न मदधीना। अतः विवाहविषये सा एव प्रष्टव्या" इति उक्तवती वृद्धा।

राजकुमाराणाम् आशयं ज्ञात्वा उषा क्षणकालं स्तब्धा। सा आरात्रि चिन्तनं कृतवती। प्रातःकाले मातामहीम् उक्तवती सा– "अम्ब! अहं त्रीन् अपि एकं प्रश्नं पृच्छामि। यस्य उत्तरं तृप्तिकरं भवति तम् एव परिणेष्यामि" इति।

अनन्तरदिने राजकुमाराः यदा प्रत्यागताः तदा वृद्धा उषायाः आशयं तान् उक्तवती। तस्याः नियमः तैः अङ्गीकृतः। प्रथमं जयः उषायाः प्रकोष्ठं प्रविष्टवान्।

"यदि आवयोः परिणयः भवतः पित्रा न अङ्गीक्रियेत तर्हि किं करिष्यति भवान्?"




इति तम् अपृच्छत् उषा।

"सः न अङ्गीकुर्यात् इति सन्देहः एव मास्तु भवत्याः। यदि कदाचित् सः न अङ्गीकुर्यात् तर्हि अपि न भीतिः। तेन अङ्गीकारयामि इति दृढः विश्वासः अस्ति मम" इति उक्तवान् जयः।

जयस्य प्रत्यागमनानन्तरं विजयः प्रकोष्ठं प्रविष्टवान्। तम् एव प्रश्नं विजयम् अपि पृष्टवती उषा।

"यदि पिता न अङ्गीकुर्यात् तर्हि किं करणीयम् इति न जानामि। प्रायः मौनं स्थितिः एव शरणम्" इति उक्तवान् विजयः।

उत्साहेन मन्दहासपूर्वकं प्रकोष्ठं प्रविष्टम् अजयम् अपि तमेव प्रश्नं पृष्टवती उषा।

"पित्रा निराकृतं चेदपि आवयोः विवाहः तु प्रचलेत् एव। भवत्याः निमित्तम् अहं राज्यं सिंहासनं चापि परित्यक्तुं सिद्धः" इति उक्तवान् अजयः।

प्रकोष्ठतः बहिः आगता उषा सद्योनिर्मितां मन्दारमालां जयस्य कण्ठे स्थापितवती।

वेतालः एवं कथां समाप्य अवदत्– "उषा यं वृतवती किं सः तेषु उत्तमः आसीत्? अजयस्य स्वतन्त्रप्रवृत्तिः। विजयः तु पितृभक्तः। राजपरिवारे स्थिताः स्वतन्त्रप्रवृत्तियुक्ताः पितृभक्ताः वा चेत् एव वरं खलु? एवं स्थिते अपि उषा किमर्थं जयम् एव परिणीतवती? जये तया कः विशेषगुणः दृष्टः? मम एतस्य सन्देहस्य समीचीनं समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "उषा काष्ठविक्रयिस्य पुत्री। राजास्थाने स्थितः कश्चित् सामान्यः अपि तस्यै योग्यः वरः भवितुम् अर्हति। पित्रा यदि सूच्येत तर्हि तादृशः एव कश्चित् परिणीतः स्यात् तया कदाचित्। किन्तु राजकुमाराः त्रयः अपि तस्याः परिणये उत्सुकाः जाताः। तदा तु उषा विवेकेन व्यवहृतवती। विजयः पितृवचनं निराकर्तुं न इच्छति। अतः स्वव्यक्तित्वं नास्ति तस्य। अजयश्च परिणयार्थं राज्यं परित्यक्तुम् अपि सिद्धः। एतेन तदीया स्त्रीलोलुपता ज्ञायते। जयश्च पिता यथा अङ्गीकुर्यात् तथा करोमि इति सधैर्यम् उक्तवान्। राज्यभारनिर्वहणम् अङ्गीकृतं चेत् सर्वं पित्रा अङ्गीक्रियते इति सः जानाति स्म। उषा अपि राज्यभारनिर्वहणदक्षम् एव इच्छति स्म। अतः सा जयं परिणीतवती। अतः उषया महान् विवेकः प्रदर्शितः इत्येव निर्णेतव्यम् अस्माभिः" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।






भारतीयाः देवताः

# महावीरः

प्राचीनकालात् अपि अस्माकं देशे जैनमतपरम्परा प्रवहन्ती अस्ति। तस्य मतस्य अधिकप्रसारः तु वर्धमानमहावीरस्य काले जातः।

क्रि.पू. ६ शतके वैशालीराजपरिवारे वर्धमानः जन्म प्राप्तवान्। त्रिंशत्तमे वयसि सः कौटुम्बिकसुखादिकं परित्यक्तवान्। पूर्वजैः त्रयोविंशतितीर्थङ्करैः यः आध्यात्मिकमार्गः प्रबोधितः सः एव मार्गः एतेन अपि अनुसृतः। जैनमततत्त्वानां प्रसारार्थं तेन विशेषप्रयत्नः कृतः। अतः एव महावीरः चतुर्विंशतितमः तीर्थङ्करः इति प्रसिद्धिं प्राप्तवान्।

मानवजीवनस्य अन्तिमः उद्देशः निर्वाणम्। आत्मनियन्त्रणपूर्वकम् अहिंसातत्त्वं समग्रतया अनुसृतं चेत् जन्ममृत्युचक्रात् मुक्तिः प्राप्यते। एतत् एव निर्वाणं नाम।

जैनमन्दिरेषु वर्धमानमहावीरस्य पूजा प्रचलति। ध्यानमुद्रालीनः महावीरः स्वर्णवर्णेन चित्र्यते प्रायः। जैनमन्दिरेषु तीर्थङ्करस्य महावीरस्य तत्पूर्वजानां तीर्थङ्कराणां च पूजा भक्त्या प्रचलति। प्राचीनानि आधुनिकानि च जैनमन्दिराणि अस्माकं देशे बहूनि सन्ति।

# अत्यल्पवयस्का ग्रन्थकर्त्री

अग्रिमवर्षसमाप्तितः पूर्वं 'सप्तमकक्ष्यीयायाः विद्यार्थिन्याः दिनचर्या' ('दि डायरी आफ् ए सेवन्त ग्रेडर्') नामकः आंग्लग्रन्थः प्रकाशयिष्यते। वर्षद्वयात् पूर्वं सप्तमकक्ष्यायां पठन्ती स्थिता बालिका ग्रीष्मविरामकाले एतं ग्रन्थं लिखितवती। एतस्य ग्रन्थस्य प्रकाशनार्थं काचित् प्रकाशनसंस्था सन्नद्धा अस्ति। वर्षान्त्यात् पूर्वम् एषः ग्रन्थः प्रकाशनीयः इति तस्याः उद्देशः।




एतस्य ग्रन्थस्य लेखिकायाः नाम नयनतारा नूरानी इति। एषा इदानीं कराचीनगरे पि.ई.सी. प्रौढशालायां नवमकक्ष्यायां पठन्ती अस्ति। पाकिस्थानीयविद्यार्थिषु एषा महत् कौतूहलं जनितवती अस्ति। सा यत्रकुत्रापि वा दृश्यतां नाम, तस्याः हस्ताङ्कनप्राप्त्यर्थं विद्यार्थिनः अहमहमिकया प्रवर्तन्ते। एवं पाकिस्थानदेशे अत्यल्पवयस्का ग्रन्थकर्त्री इति तस्याः महती ख्यातिः प्रसृता दृश्यते। एकादशे वयसि तया यः ग्रन्थः लिखितः स च वर्षाभ्यन्तरे प्रकाशितः। एतस्य ग्रन्थलेखनस्य पृष्ठभूमिका रोचककथासदृशी अस्ति।

नयनतारायाः माता अध्यापिका। सा प्रसिद्धा ग्रन्थकर्त्री अपि। कराचीनगरस्थया कयाचित् प्रसिद्धया प्रकाशनसंस्थया सा प्रार्थिता आसीत् यत् बालोपयोगी कश्चन ग्रन्थः लिखित्वा दातव्यः इति। किन्तु दीर्घकाले अतीते अपि सा तादृशं ग्रन्थं लेखितुं न शक्तवती आसीत्।

नयनतारा एतं प्रसङ्गं जानाति स्म। अतः सा कदाचित् स्वयंस्फूर्त्या कागदराशिं पुरतः संस्थाप्य मनसि आवर्तमानां काञ्चित् कथां लेखितुम् उद्युक्ता अभवत्। कथाग्रन्थम् अर्धं लिखित्वा सा प्रकाशकाय प्रेषितवती। एतं कथाग्रन्थं पठित्वा सन्तुष्टः प्रकाशकः अनन्तरदिने एव दूरवाण्या असूचयत् यत् अवशिष्टः भागः अपि अविलम्बेन प्रेषणीयः इति। ततः केषुचित् दिनेषु नयनतारा कथाग्रन्थ-लेखनं समापितवती। एवं साकारस्वप्ननामकः (ए ड्रीम् कम् ट्रू) कथाग्रन्थः प्राकाश्यं गतः। एतस्मिन् कथाग्रन्थे कस्याश्चित् बालिकायाः जीवनघटनाः निरूपिताः सन्ति। 'विमातृपीडां सोढुम् अशक्नुवती काचित् बालिका गृहात् निर्गत्य सर्कस्संस्थां प्रविश्य तत्र बहुविधानि साहसकौतुकानि प्रदर्शयति, अन्ते च जन्मदात्र्या मात्रा मेलिष्यति' इति तु कथासारः। एतस्य कथाग्रन्थस्य लेखनात् नयनतारा नूरानी पाठकानां प्रिया जाता।

नयनतारा प्रधानतया गणितं भौतशास्त्रं च पठति। कक्ष्यायां प्रथमं स्थानं सदा एतस्याः एव। विरामसमये एषा कथां लेखितुम् उद्युक्ता भवति। षोडशवर्षीया अग्रजा एतस्याः मार्गदर्शिका। दशवर्षीयः अनुजः प्रूफ्संशोधने साहाय्यकः। पिता पाण्डुलेखं समीचीनतया उट्टङ्क्य आवश्यकतायां सत्यां तत्र तत्र परिष्कारम् अपि कृत्वा ग्रन्थं मुद्रणार्थं सज्जीकरोति। तस्याः पिता च पत्रकारः।

कदाचित् (न सर्वदा) पित्रा कृतं परिष्कारम् अनङ्गीकुर्वती नयनतारा पित्रा सह वादविवादं करोति अपि।

# भवन्तः जानन्ति वा?

१. प्रपञ्चे अत्यधिकसङ्ख्यया विक्रीयमाणा पत्रिका का?
२. प्राचीने काले रोम्देशे उलूकः अनिष्टस्य विनाशस्य च सूचकः इति भावना आसीत्। एवं तर्हि तत्र तदा मधुमक्षिकायाः विषये का भावना आसीत्?
३. आंग्लभाषया रचितं किं गीतम् अत्यधिकजनप्रियम् अस्ति?
४. केरलेषु जन्म प्राप्य लक्षद्वीपे विद्याभ्यासं प्राप्तवतः गणितज्ञस्य नाम किम्? कस्मिन् विषये तेन प्रसिद्धिः प्राप्ता?
५. अस्माकं त्रिवर्णध्वजस्य रचना मेडम् कामया यथा कृता तथा अमेरिकादेशस्य ध्वजस्य रचना अपि कयाचित् महिलया कृता। तस्याः नाम किम्?
६. भारतेन ऐदम्प्राथम्येन कस्य सोवियत्जनस्य गौरवार्थं मूल्याङ्कः प्रकाशितः?
७. इंग्लेण्ड्राज्ञी विक्टोरिया, रशियादेशीयः पीटर्-दि-ग्रेट् च कस्यचित् वैज्ञानिकस्य दर्शनार्थं गतवन्तौ। सः विज्ञानी कः? तेन किम् उपकरणम् अन्विष्टम्?
८. अमेरिकादेशीयस्य ईष्टर् क्लैवूलैण्ड्वर्यस्य किं वैशिष्ट्यम्?
९. कः अमेरिकाध्यक्षः पदवीत्यागपर्यन्तम् अपि ब्रह्मचारी एव आसीत्?
१०. पृथिव्याम् इतः पूर्वं दृष्टम् अतिगरिष्ठं तापमानं किम्?
११. एतादृशम् अतिकनिष्ठं तापमानं किम्?
१२. प्रपञ्चे जातः भयानकः प्रकृतिविकोपः कः?

## उत्तराणि

१. जपान्देशतः प्रकाश्यमाना 'योमियूरि शिमवम्', या च १८७४ तमे वर्षे आरब्धा।
२. भाग्यकारकः इति। सः देवदूतः इति भावना आसीत्।
३. 'हेपी बर्त् डे टू यू ....' गीतम्। एतत् १९३६ तमे वर्षे मिल्कर्ड् पेटीहिल् रचितवान्।
४. आर्यभटः इति। वृत्तपरिधि-व्यासयोः सम्बन्धः सम्यक् निरूपितः तेन।
५. बेट्सी रोज्। फिल्डेल्फियादेशीया एषा सौचिकवृत्त्या जीवति स्म।
६. मेक्सिम् गोर्कि निमित्तम्। एतत् १९६३ तमे वर्षे प्रकाशितम्।
७. आष्टन् लियुवेन् होक्। सूक्ष्मदर्शकम्।
८. यदा एतस्य पिता ग्रोवर् क्लीवूलैण्ड् अध्यक्षपदवीम् अलङ्कृतवान् आसीत् तदा एतेन श्वेतभवने जन्म प्राप्तम्। एवं जन्म प्राप्तवान् एषः एकः एव।
९. जेम्स् बुचानन्। एतस्य अनन्तरम् अब्राहम् लिङ्कन् अध्यक्षः जातः।
१० ५७.८°C, एतत् उत्तराफ्रिकायाम् अजीजाप्रदेशे १९२२ तमे वर्षे सप्टम्बर्-१३ दिनाङ्के दृष्टम्।
११. ८८.३°C, एतत् अण्टार्किटिकायां वास्टोकशूल्ड् प्रदेशे १९६० तमे वर्षे आगस्ट्-२९ दिनाङ्के दृष्टम्।
१२. चीनादेशे हुयांग् होनद्यां १९३१ तमे वर्षे महापूरः आगतः, तदा ३७ लक्षं जनाः मृताः आसन्।

# र स वा र्ता:

## अतिविशालं कुटुम्बम्




'कस्मिंश्चित् कुटुम्बे सप्तशतं सदस्याः स्युः, ते सर्वे जीवन्तः स्युः' इत्येषः विषयः किम् ऊहितुं शक्यः? तादृशं कल्पनासामर्थ्यम् अस्माकं न स्यात् कदाचित्। किन्तु एषः विषयः न कल्पनामात्रम्, अपि तु वस्तुस्थितिः। केरलराज्ये कालीकत्समीपे कुट्टिचिरानामके स्थले 'कोसानि वीड्' नामकं कुटुम्बम् अस्ति। एतस्य कुटुम्बस्य वैशाल्यं तावत् अस्ति यत् एतस्य नाम गिन्नीस्पुस्तके अपि अन्तर्भूतम् अस्ति। चेरिया आयिषा एतस्य कुटुम्बस्य अतिवयस्का वृद्धा। एतस्याः वयः ९० वर्षाणि, पुत्रपौत्रप्रपौत्राणां सङ्ख्या आहत्य ६८० स्यात्। केभ्यश्चित् वर्षेभ्यः एते सर्वे सदस्याः प्रतिवर्षम् अगस्ट्मासे १५ दिनाङ्के एकत्र मिलन्तः सन्तोषम् अनुभवन्तः सन्ति। बहुमतपद्धत्या अत्र कुटुम्बनायकस्य चयनं क्रियते। ७५ वर्षीयः अहमद् कोया गतेभ्यः ३३ वर्षेभ्यः एतस्य कुटुम्बस्य नायकत्वं निर्वहन् अस्ति।

## दशमः ग्रहः

'जामाता दशमो ग्रहः' इति काचित् हास्योक्तिः संस्कृते प्रसिद्धा। किन्तु सौरमण्डले दशमः ग्रहः अपि अस्ति इति ब्रिटिष्खगोलशास्त्रज्ञाः वदन्ति। तैः दशमग्रहस्य स्थितिः मासत्रयात् पूर्वं निरूपिता। एषः दशमः ग्रहः भूमेः अपेक्षया दशगुणितं विशालः स्यात्। सूर्यं परितः भूमिः यथा वलयाकारेण परिभ्रमति तथैव एषः नूतनः ग्रहः स्वमातृनक्षत्रं परितः परिभ्रमति। एषः ग्रहः प्रतिसेकेण्ड्त्रये एकवारं १४०० मेगाव्याट्स् तरङ्गवेगेन रेडियोतरङ्गान् उत्पादयति इति श्रूयते। शक्तियुता आकाशवाणी अस्ति चेत् एषः तरङ्गः ग्रहीतुं शक्यः इति शास्त्रज्ञाः वदन्ति। धनुराशिनक्षत्रसमीपे स्थितस्य एतस्य ग्रहस्य नाम पि.एस्.आर्. १८२९-१० इति निश्चितम् अस्ति।





# अङ्गुल्यां नखोद्भवः

रामापुरे शान्ता शिवरामः चेति दम्पती आस्ताम्। तयोः एकमात्रपुत्रः शङ्करः इति। तौ स्वभावेन नितरां मुग्धौ। अतः तयोः पुत्रः अपि स्वभावेन मुग्धः एव आसीत्। पुत्रस्य मौग्ध्यं दृष्ट्वा शान्ता-शिवरामयोः सदा चिन्ता।

पुत्रस्य भाविजीवनस्य विषये बहुधा चिन्तनं कृत्वा अन्ते तौ निश्चितवन्तौ यत् निर्धनकुलोत्पन्नां बुद्धिमतीं कन्याम् अन्विष्य स्नुषारूपेण आनयामः चेत् पुत्रस्य जीवनं निरातङ्कं स्यात् इति। अतः तौ कन्याशोधनम् आरब्धवन्तौ।

बहुधा शोधनं कृत्वा ललितानामिका स्नुषारूपेण आनेतव्या इति निश्चितवन्तौ तौ। शुभे मुहूर्ते ललिता-शङ्करयोः विवाहः अपि प्रवृत्तः। ललिता पतिगृहम् आगतवती।

ललिता बुद्धिमती, गृहकार्येषु निपुणा च। तस्याः व्यवहारकौशलम् अपि अधिकम् आसीत्। अतः, 'आवयोः चिन्तनस्य अनुगुण योग्या वधूः एव प्राप्ता' इति तृप्तिं प्राप्तवन्तौ शिवरामः शान्ता च।

किन्तु एषा तृप्तिः चिरकालं न स्थिता। श्वशुरः श्वश्रूः च महाबुद्धिमन्तौ न इति ज्ञातवती ललिता। 'वृद्धयोः एतयोः श्वशुरयोः सेवा मया सदा करणीया। एवं करोतु, तथा मा करोतु ति पदे पदे एतौ उपदिशतः अपि। यदि अहं पत्या सह अन्यगृहे निवासं कुर्यां तर्हि एतत्सर्वं कष्टं मम न भविष्यति। मम पतिः तु मुग्धः इत्यतः तस्य बुद्धेः परिवर्तनं न क्लेशाय। अतः उपायेन मया कार्यं साधनीयम्' इति चिन्तितवती ललिता। तदनुगुणम् उपायम् अपि चिन्तितवती सा।

कदाचित् शान्ता शिवरामः च पुराणश्रवणार्थं शिवालयं गतवन्तौ आस्ताम्। शङ्करः क्षेत्रं गतः इतोऽपि न प्रत्यागतः



आसीत्। ललिता पत्युः आगमनं प्रतीक्षमाणा पतिः यदा दूरे दृष्टः तदा आर्द्रवस्त्रेण अङ्गुलिम् आच्छाद्य वेदनापूर्णं ध्वनिं कुर्वती मञ्चे सुप्तवती।

शङ्करः गृहं प्रविश्य रोदनं कुर्वत्याः पत्न्याः समीपं गत्वा– "ललिते! किम् अभवत्?" इति प्रीत्या पृष्टवान्।

ललिता अश्रूणि स्रावयन्ती– "महती आपत् आगता। अङ्गुल्यां नखः उद्भूतः" इति वदन्ती वेदनया क्रन्दनं कृतवती।

"किम् उक्तवती? अङ्गुल्यां नखोद्भवः इति? तेन महती वेदना अनुभूयते वा? कीदृशं कष्टम् आपतितम्! तिष्ठतु तावत्, इदानीम् एव वैद्यं गुरुराजवर्यम् आनेष्यामि" इति उक्त्वा वैद्यम् आनेतुं प्रस्थितः शङ्करः।

तस्य गमनं निवारयन्ती ललिता– "मास्तु भोः! वैद्यस्य आनयनं मास्तु। वैद्यचिकित्सातः एतस्मिन् सन्दर्भे न किमपि प्रयोजनम्। मम पितामहीमुखात् मया श्रुतं यत् पिशाचकारणतः एवं भवति इति। अन्यगृहे वासः एव एतस्य परिहारोपायः इति मम पितामह्या उक्तम्। यदि अत्रैव तिष्ठेम तर्हि प्राणहानिः निश्चिता। अचिरात् एव अहं प्राणैः वियुक्ता भवेयम्" इति उक्त्वा पुनः उच्चैः रोदनं कृतवती।

पत्न्याः वचनेषु विश्वसन् शङ्करः इदानीं किं करणीयम् इति अजानन् मूढतया स्थितवान् आसीत्। तावता शान्ता शिवरामः च शिवालयतः प्रत्यागतवन्तौ। शङ्करः प्रवृत्तं समग्रं निवेदितवान्।

'पृथक् वासः करणीयः इति उद्देशेन ललितया एषः कपटोपायः आश्रितः' इति शान्तया ज्ञातम्। तथापि किमपि अजानती इव उक्तवती सा– "अहो! अङ्गुल्यां नखोद्भवः! अस्माकं गृहे कीदृशं कष्टम् आपतितं रे" इति।

प्रकोष्ठे स्थिता ललिता श्वश्र्वाः वचनं श्रुतवती। 'मूढा एषा मया आश्रितं कपटोपायं न ज्ञातवती एव' इति सन्तोषं प्राप्तवती सा।

अत्रान्तरे शान्ता एकान्ते शिवरामं किमपि उक्त्वा प्रेषितवती। अनन्तरं स्नुषायाः पार्श्वे उपविश्य– "अङ्गुल्यां नखोद्भवः चेत् कीदृशी विपत् इति अहं जानामि वत्से! श्वः

एव भवतो: वसत्यर्थम् अन्यत् गृहं व्यवस्थापयिष्यामि" इति अनुतापेन उक्तवती।

ततः अल्पे एव काले शिवरामः मान्त्रिकवैद्येन भैरवेण सह प्रत्यागतवान्। "अङ्गुलिः कर्तिता चेत् पिशाचः धाविष्यति, अल्पे एव काले अङ्गुलिः वर्धिष्यते च इति भैरवः वदति" इति पत्नीम् उक्तवान् च। भैरवस्य हस्ते तीक्ष्णा छुरिका आसीत्।

शान्ता प्रकोष्ठतः बहिः आगत्य शङ्करस्य कर्णे किमपि उक्तवती। मुग्धः शङ्करः अन्तः गत्वा शयानां पत्नीम् उपवेश्य तस्याः बाहू दृढं गृहीतवान्। ललिता ततः विमोचनं प्राप्तुं किमपि वक्तुं च उद्युक्ता। तदा शङ्करः बन्धनं दृढीकृत्य तस्याः मुखपिधानम् अपि कृतवान्। शान्ता अत्र साहाय्यं कृतवती।

भैरवः निकषोपले छुरिकायाः घर्षणं कुर्वन् एव प्रकोष्ठस्य अन्तः आगत्य– "आर्ये, अङ्गुलिं प्रसारयतु। यदि विलम्बः क्रियेत तर्हि नखः वर्धेत। तदा च कर्तनं क्लेशाय भवेत्। मया अत्रत्यं कार्यं समाप्य त्वरया गन्तव्यम्। इतोऽपि चतुर्षु गृहेषु अङ्गुल्यां नखोद्भवः जातः अस्ति इति श्रूयते। तत्र सर्वत्र मया एव गन्तव्यम्" इति वदन् त्वरां प्रदर्शितवान्।

मम कपटोपायः श्वश्र्वा ज्ञातः इति ज्ञातवती ललिता। अङ्गुलिकर्तनात् नितरां भीता अस्ति सा। शान्ता तु एतत् किमपि



अविगणयन्ती भैरवम् उक्तवती– "भैरवार्य! त्वरावशात् प्रमादं मा करोतु। अन्यासाम् अङ्गुलीनां हानिः यथा न स्यात् तथा अङ्गुलिं कर्तयतु" इति।

तदा भैरवः उच्चैः हसन्– "अम्ब! वैद्यं माम् एव चिकित्साक्रमम् उपदिशति खलु भवती! किम् अहं हस्तम् एव कर्तयेयम् इति भीतिः वा? पूर्वं कदाचित् द्वित्रवारम् एकस्याः अङ्गुल्याः कर्तनसमये अन्या अङ्गुलिः अपि कर्तिता स्यात् मया। किन्तु सर्वदा तथा न भवति। चिन्ता मास्तु भवत्याः" इति शान्ताम् उक्त्वा ललिताम् उक्तवान् सः– "वत्से! अङ्गुलिं प्रसारयतु तावत्" इति।

भीता ललिता मुष्टिं बद्ध्वा भैरवः अङ्गुलिं

यथा न स्पृशेत् तथा स्थितवती। "एवं चेत् कथं वत्से!" इति वदन् ललितायाः हस्तं गृहीतवान् भैरवः। "रे रे, मां व्रणितां मा करोतु" इति वदन्ती शान्ता भीतिं प्रकटयन्ती बन्धनं शिथिलीकृतवती। भीतस्य शङ्करस्य ग्रहणम् अपि शिथिलं जातम्। तदा झटिति ललिता उत्थाय श्वश्र्वाः पादौ गृहीत्वा अश्रूणि स्रावयन्ती– "अम्ब! मां क्षाम्यतु कृपया। अज्ञानेन मया कपटता आश्रिता। मम अङ्गुलिं मा कर्तयन्तु कृपया। एतं भैरवम् इतः प्रेषयन्तु" इति।

शान्तायाः मुखे मन्दहासः आगतः। भैरवः छुरिकां पुटीकृत्य ततः बहिः गतवान्।

शङ्करः किं प्रवर्तमानम् अस्ति अजानन् आतङ्कयुक्तेन स्वरेण– "उद्भूतस्य नखस्य का गतिः?" इति पृष्टवान्।

"भोः, सर्वेषाम् अङ्गुलीषु नखाः भवन्ति एव। तदर्थं का चिन्ता?" इति हसन् उक्तवान् भैरवः।

ललितायाः महती लज्जा। शान्ता स्नुषायाः पार्श्वे उपविश्य– "वत्से, अन्यस्मिन् गृहे वासः करणीयः इति इच्छा अनुचिता न। एतस्मिन् वयसि एतादृशी इच्छा सहजा। किन्तु एतदर्थं भवत्या अन्यत्र गन्तव्यं नास्ति। क्षेत्रसमीपे एकं कुटीरं निर्माय अहं भवत्याः श्वशुरः च निवसाव। तेन क्षेत्ररक्षणम् अपि कृतं भवति। भवन्तौ अत्रैव तिष्ठताम्। मम पुत्रः स्वभावेन मुग्धः। तस्य मूढता यथा क्षीणा स्यात्, बुद्धिमत्ता यथा वर्धेत तथा प्रयत्नं करोतु भवती। तस्य जीवनस्य सफलता भवदधीना अस्ति" इति प्रीत्या उक्तवती।

तदा ललिता श्वश्रूं साष्टाङ्गं नमस्कृत्य– "अम्ब! इतः परं भवन्तौ विहाय पृथक् वासं मनसा अपि न चिन्तयामि। इदानीं या अविवेकिता प्रदर्शिता मया, तेनैव नितरां लज्जिता अस्मि अहम्। भवद्भ्याम् औदार्येण अहं क्षन्तव्या। भवतोः सेवा एव मम कर्तव्यम्" इति वदन्ती श्वशुरस्य पादयोः अपि पतितवती।





# पद्यरचनाकौशलम्

कस्मिंश्चित् ग्रामे पूर्वं त्रयः स्नेहिताः आसन्। तेषां नाम आसीत् वरदः, रामचन्द्रः, महाबलश्चेति।

वरदः नास्तिकः। ये देवपूजादिकं कुर्वन्ति, ये च मन्दिरं गच्छन्ति, तेषां निन्दनम् उपहासं च करोति सः।

रामचन्द्रः महादैवभक्तः। सर्वं दैवाधीनम् इति तस्य निर्णयः। यदि कश्चित् तं ताडयेत् तर्हि अपि सः मौनं तिष्ठति। तादृशं देवः एव यथायोग्यं दण्डयिष्यति इति तस्य भावना।

महाबलः स्वभावेन कृपणः। तस्य प्रभूता सम्पत्तिः अस्ति चेदपि कस्मैचित् अपि किञ्चित् अपि न ददाति। दानं निरर्थकम् इति तस्य चिन्तनम्।

एते त्रयः परस्परमैत्र्या व्यवहरन्ति इत्येव आश्चर्यम्। शिवशरणः नाम कश्चन चतुरमतिः अपि एतेषां स्नेहितः आसीत्।

एतेषां चतुर्णाम् अपि श्लोकरचनाया पद्यरचनायां च रुचिः आसीत्। अतः एते प्रतिदिनं सायं ग्रामसीमायां स्थितस्य वटवृक्षस्य छायायाम् उपविश्य साहित्यगोष्ठीं निर्वर्तयन्ति स्म। एतैः रचितस्य पद्यस्य श्रोता कोऽपि अन्यः न भवति। तथापि तेषां पद्यरचनाप्रवृत्तिः तु अनुवर्तते एव।

जनाः एतेषां विषये विविधानि उपहासवचनानि वदन्ति स्म। वरदस्य विषये ते एवं वदन्ति स्म– "वरदः देवनिन्दकः इत्यतः यदि कदाचित् कोऽपि पिशाचः तं पीडयितुम् आगच्छेत् तर्हि कोऽपि देवः तं न रक्षति। पिशाचनिवारणे वरदः मन्त्रतन्त्रादिकं न जानाति। तथापि सः भीतः न भवति। सः धैर्येण पद्यानि श्रावयितुम् उद्युक्तः भवति। तदा च पिशाचः धावति" इति।

"भामहः"

रामचन्द्रविषये एवं वदन्ति स्म– "एषः देवभक्तः। 'जनाः तु एतस्य पद्यं न शृण्वन्ति। यदि अहम् अपि न शृणुयां तर्हि मम भक्तस्य शोचनीया दशा स्यात्' इति आलोच्य देवः रामचन्द्रस्य पद्यं कथमपि शृणोति एव। अतः सः सदा स्वकाव्यं देवस्य पुरतः उपविश्य पठति" इति।

महाबलविषये एवं कथयन्ति स्म– "महाबलस्य पद्यात् भीताः जनाः तस्य समीपं न गच्छन्ति एव। ये अवश्यम् ऋणम् इच्छन्ति ते अपि पद्यश्रवणात् भीताः सन्तः तत्समीपं न गच्छन्ति। एतावदेव न, महाबलस्य पद्यात् भीताः मशक-मक्षिका-मूषकादयः अपि तस्य गृहात् पलायन्ते" इति।

"शिवशरणः यद्यपि चतुरमतिः तथापि एतेभ्यः त्रिभ्यः किमपि प्रयोजनं स्यात् इति आलोच्य एतेषां मैत्रीं सम्पादितवान्। मैत्रीरक्षणार्थं तेषां पद्यम् अनिवार्यतया शृणोति अपि। एतैः पीड्यमानः सः एतान् अपि पीडयितुम् इच्छन् स्वयं पद्यानि रचयित्वा श्रावयन् पीडयन् प्रतीकारं साधयति" इति वदन्ति स्म जनाः।

एवं जनाः विविधवचनानि वदन्ति चेदपि एतेषां दैनन्दिनगोष्ठी तु प्रचलति एव। परस्परश्रावणेन परस्परप्रशंसया च सन्तुष्टाः भवन्ति ते।

तत्प्रदेशे भोजराजः नाम कश्चन धनिकः आसीत्। 'कविपोषकः' इति ख्यातिः प्राप्तव्या इति तस्य मनसि इच्छा उत्पन्ना। अतः सः काव्यरचनास्पर्धाम् आयोजितवान्। बहव



स्पर्धायां भागं गृहीतवन्तः। भोजराजः पञ्च पद्यानि चित्वा तद्रचयितृभ्यः सहस्रं रूप्यकाणि प्रमाणपत्रं च दत्तवान्। एवं विजेतृषु शिवशरणः अपि अन्यतमः। वरदः, रामचन्द्रः, महाबलश्चापि यद्यपि स्पर्धायां भागं गृहीतवन्तः तथापि तैः पारितोषिकं किमपि न प्राप्तम्।

एतत्कारणतः वरदादयः त्रयः अपि शिवशरणम् असूयया द्रष्टुम् आरब्धवन्तः। एतेन शिवशरणः खिन्नः। 'उपायेन एतेषां मैत्री पुनः प्राप्तव्या, एतेषां दोषाः अपि निवारणीयाः' इति आलोचितवान् शिवशरणः।

अतः सः वरदस्य समीपं गत्वा उक्तवान्– "भवान् देवे न विश्वसिति इत्यतः देवः कुपितः। अतः भवता पारितोषिकं न प्राप्तम्। इतः परं वा देवे विश्वसितु। तदा भवतः हितं सिध्येत्" इति।

रामचन्द्रस्य समीपं गत्वा उक्तवान् सः– "अदृश्ये देवे भवता यथा विश्वासः क्रियते तथा लोकोपकारकेषु जनेषु अपि गौरवं प्रकटयतु। धनिकः भोजराजः परोपकारी। तस्मिन् भवता श्रद्धा प्रकटिता यदि स्यात् तर्हि भवान् अपि पारितोषिकं प्राप्तवान् स्यात्। अतः इतः परं वा भोजराजसदृशे सज्जने आदरवान् भवतु" इति।

महाबलम् उद्दिश्य उक्तवान् शिवशरणः– "भोः, कृपणता सर्वथा निन्द्या। दानं करणीयं सदापि। भोजराजः काव्यस्य श्रेष्ठत्वनिर्णयार्थं कञ्चित् पण्डितं



नियोजितवान् आसीत्। तादृशः पण्डितः यदि भवता दानादिना तोषितः स्यात् तर्हि भवान् अपि पारितोषिकं प्राप्तवान् स्यात्'' इति।

एवं शिवशरणः त्रीन् अपि भिन्नक्रमेण किञ्चित् उक्तवान्। किन्तु तेषु त्रिषु किमपि परिवर्तनं तु न जातम्। अतः सः पूर्वम् उक्तम् एव विषयं पुनः तान् बोधितवान्।

मित्रस्य उपदेशं द्विवारं श्रुत्वा वरदः उक्तवान्– "भोः, देवे विश्वस्य भवान् पारितोषिकं प्राप्तवान् इति ज्ञातं मया। किन्तु धिक् देवम्। मानवेषु तारतम्यभावं प्रदर्शयति सः। अहं तु देवं धिक्कृत्य एव जीविष्यामि। स्वसामर्थ्येन उत्तमं पद्यं रचयित्वा पारितोषिकं प्राप्स्यामि। देवस्य साहाय्यं मास्तु मम'' इति।

"दानादिना जनान् वशीकरोतु इति माम् उपदिष्टवान् भवान्। प्रायः भवान् अपि एवं वशीकृत्य एव पारितोषिकं प्राप्तवान् स्यात्। अहं न्याय्येन मार्गेण गन्तुम् इच्छामि। प्रतिभा अस्ति चेत् पारितोषिकं कदाचित् प्राप्यते एव। अतः न काऽपि चिन्ता मम'' इति उक्तवान् महाबलः।

रामचन्द्रः एवम् उक्तवान्– "मानवे सज्जनत्वं यावत् वा भवतु नाम, तथापि मानवः मानवः एव। न कदापि देवतुल्यः भवति सः। अतः अहं देवे एव विश्वसिमि, न मानवेषु। यदा देवानुग्रहात् अहं पारितोषिकं प्राप्स्यामि तदा एव सन्तुष्टः भवामि। मम तु न काऽपि त्वरा'' इति।

एवं मित्राणां परिवर्तनार्थं शिवशरणेन यानि वचनानि उक्तानि तानि विपरीतफलदायकानि एव जातानि। यतः वरदादयः इदानीं पूर्वापेक्षया अधिकम् अनादरं प्रकटयन्तः आसन्।

'एते वरदादयः अन्येषु दोषं पश्यन्तः ततः स्वयं सन्तोषम् अनुभवन्ति। एतादृशानां सहवासतः न किमपि प्रयोजनम्। इतः परम् एतेषां सहवासः एव मास्तु' इति आलोच्य शिवशरणः वरदादीनां सहवासं परित्यक्तवान्।






सीतावार्तां श्रुतवतः रामस्य हृदयं नितरां सन्तप्तम् अस्ति। 'एतत्क्षणे एव कथमपि सीतायाः पुरतः स्थातव्यम्' इति इच्छति तदीयं हृदयम्। भयङ्करीणां राक्षसीनां मध्ये स्थितां सीतां कल्पनामात्रेण अपि द्रष्टुं न इच्छति सः। सीता यद्यत् उक्तवती तत्सर्वं पुनः पुनः हनूमतः मुखात् श्रुतवान् अस्ति रामः। तथापि न तृप्तिः तस्य। "आञ्जनेय! सीतया अन्यत् किमपि यदि उक्तं स्यात् तर्हि तत् स्मृत्वा वदतु कृपया" इति पुनरपि उक्तवान् रामः।

"आर्य! काकवृत्तान्तं मां निवेद्य सीता उक्तवती यत् एषः वृत्तान्तः निवेदितः चेत् मद्दर्शनं भवता कृतम् इत्यत्र रामः विश्वसिति एव इति। तया एतदपि उक्तम्— 'येन रामेण दर्भम् अभिमन्त्रयता महती शक्तिः सृष्टा तेन कुतो वा एते क्षुल्लकाः राक्षसाः न मार्यन्ते? यदि रामः इच्छेत् तर्हि राक्षसानां मारणं क्षणमात्रस्य कार्यम्। रामेण लक्ष्मणः वा कुतो न प्रेषितः? अथवा विधेः एव एषः दोषः। अहं कुत्र अस्मि इति तौ न जानीतः। एवं स्थिते किं वा कुरुतः तौ? इदानीं तु भवता अहं दृष्टा। इतः परम् अविलम्बेन मम इतः मोक्षः स्यात् खलु? मया पूर्वजन्मनि महत् पापम् आचरितम् आसीत् इति भाति। अतः एतादृशं कष्टम् अनुभूयते। आस्तां तावत्। मां कुत्रापि अपश्यतोः तयोः कियत् दुःखं स्यात्? तयोः सान्त्वनं करोतु भवान्' इति। सगद्गदम् एतत्सर्वम् उक्त्वा 'भवान् एव शरणं मम' इति वदन्ती चूडामणिं मम हस्ते निक्षिप्य

१८. वानरसेनाप्रस्थानम्।



अभिज्ञानार्थम् एतदपि ददातु इति उक्तवती सा। सर्वेषां कुशलं पृष्टवती सा। 'सुग्रीवबलेन सह आगत्य अचिरात् एव रामलक्ष्मणौ राक्षसान् रावणं च संहृत्य भवतीं बन्धविमुक्तां कुरुतः' इति मया तस्याः सान्त्वनं कृतम्। अतः अविलम्बेन तस्याः बन्धविमोचनोपायः चिन्तनीयः'' इति निवेदितवान् हनूमान्।

हनूमतः वचनस्य श्रवणतः रामस्य दुःखं शान्तम्। सन्तोषः उद्गतः। सः सुग्रीव-लक्ष्मणादीन् पश्यन्— ''एतेन हनूमता महत् कार्यं कृतम्। अनन्यसाध्यं कार्यम् एतत्। समुद्रलङ्घनार्थं वायोः गरुडात् च ऋते हनूमान् एकः एव समर्थः। मायाबलेन आवृतां लङ्कां विनायासं प्रविश्य अग्निना तां पुरीं दग्ध्वा भयं जनयित्वा सकुशलं प्रत्यागमनं किम् अल्पं कार्यम्? सुग्रीवस्य आज्ञायाः पालनसमये हनूमान् स्वबुद्धिमत्ताम् अपि उपयुज्य अशोकवनध्वंसं, राक्षसवधं, लङ्कापुरीदाहं च कुर्वन् राक्षसपक्षे महतीं भीतिम् उत्पाद्य एव प्रत्यागतवान्। एतेन कृत्येन सुग्रीवस्य सन्तोषं वर्धितवान् अस्ति। रघुकुलस्य अपि साहाय्यं कृतं तेन। एवं महत् कार्यं कृतवन्तं हनूमन्तं वनवासी अहं सत्कर्तुं न शक्नोमि किल इत्येव दुःखं मम। सीतान्वेषणं कृतवतः, तद्द्वारा मम प्राणान् रक्षितवतः एतस्य प्रत्युपकारं केन वा क्रमेण करोमि? हनूमन्! दातुं तु किमपि नास्ति मम समीपे। आलिङ्गनमात्रं ददामि भवते'' इति उक्त्वा हनूमन्तं दृढम् आलिङ्गितवान्। हनूमान् आनन्दाश्रूणि स्रावयन्— ''एतत् तु दिव्यसुखम्। भवतः पादसेवकत्वं मम सदा यथा स्यात् तथा अनुगृह्णातु कृपया'' इति उक्त्वा रामं साष्टाङ्गं नमस्कृतवान्। ''असाध्यं साधयतः भवतः विनयः अपि अपूर्वः एव'' इति उक्तवान् रामः।

अनन्तरं क्षणकालम् आलोच्य रामः पुनः उक्तवान्— ''इतः परम् अविलम्बेन अग्रिमं पदं चिन्तनीयम्। लङ्का जेतव्या चेत् वानरैः समुद्रलङ्घनं कृत्वा लङ्कासमीपं गन्तव्यम्। किन्तु अपारस्य समुद्रस्य लङ्घनं कथम्? सङ्कल्पमात्रेण, अल्पेन वा प्रयत्नेन एतत् न सिध्यति खलु? अतः समुद्रलङ्घनोपायः कः

इदानीम्?" इति।

तदा सुग्रीवः रामम् उक्तवान्– "एतदर्थं किमर्थं तावती चिन्ता? सीतादेवी कुत्र अस्ति इति, शत्रुः कीदृशः इति च ज्ञातम् अस्ति। अतः लङ्कासमीपं कथमपि गमिष्यामः एव वयम्। समुद्रः अत्र विघ्नकारकः न भवेत्। वयं सेतुं निर्माय समुद्रं लङ्घयिष्यामः। अस्माकं पक्षे पराक्रमशालिनः बहवः सन्ति। अतः सेतुनिर्माणं न कष्टाय। यदि सेतुनिर्माणं न शक्येत तर्हि मार्गान्तरं चिन्तयिष्यामः वयम्। समुद्रलङ्घनं तु कथमपि करिष्यामः एव। एतस्मिन् सन्दर्भे भवतः चिन्ता अनुचिता। मार्गचिन्तने भवान् अपि सहकरोतु। रावणसंहारः निश्चयेन भविष्यति। अन्तिमजयः अस्माकम् एव। सद्यः समुद्रतीरं गच्छाम वयम्। तीरे प्राप्ते, कोऽपि नूतनः उपायः स्फुरेत् अपि। वृथाचिन्तनार्थं न एषः समयः। अग्रे सराम वयम्" इति।

तदा रामः हनूमन्तं पश्यन् उक्तवान्– "सेतुं निर्माय, तपसा मार्गान्तरं प्राप्य, शोषयित्वा वा वयं समुद्रलङ्घनं कर्तुं शक्नुमः। अनन्तरकार्यम् अपि इदानीम् एव चिन्तयामः चेत् वरं खलु? अतः लङ्का कीदृशी इति वदतु तावत्। तत्र कति दुर्गाणि सन्ति? तत्रत्यस्य सैन्यस्य परिमाणं कियत्? कतिविधाः रक्षणोपायाः आश्रिताः तत्र? प्राकारः तत्रत्यः कीदृशः? सर्वं विस्तरेण वदतु तावत्" इति।



"लङ्का सुविशाला नगरी। तत्र असङ्ख्याः राक्षसाः सुखेन जीवन्ति। समग्रे नगरे अश्वाः, रथाः, गजाः च तत्र तत्र दृश्यन्ते। समग्रस्य नगरस्य चत्वारि महाद्वाराणि सन्ति। तानि च नितरां दृढानि। द्वाराणां पार्श्वे एव बाणवर्षणं शिलापातनं च कर्तुं समर्थानि यन्त्राणि सन्ति। यदि कोऽपि शत्रुः द्वारसमीपे आगच्छेत् तर्हि एतानि यन्त्राणि एव तं नाशयिष्यन्ति। अतः लङ्काप्रवेशः सर्वथा असाध्यः। एतावदेव न, द्वारस्य पार्श्वे घोराः आयुधधारिणः राक्षसाः सदा रक्षणकार्यरताः भवन्ति। तेषां हस्ते स्थितं परिघाद्यायुधं युगपत् एव शतं जनान् मारयितुं समर्थम्। नगरीं परितः



सुवर्णप्राकारः अस्ति। प्राकारं परितः गभीराः परिखाः सन्ति। तासु घोराः मकराः तिमिङ्गिलाः दंष्ट्रायुक्ताः मीनाः च सन्ति। परिखायाः क्रमणार्थं प्रतिद्वारसमीपं काष्ठनिर्मिता सेतुः भवति। तस्याः स्थापनार्थम् अपनयनार्थं च यन्त्रस्य उपयोगः क्रियते। युद्धप्रसङ्गे असति अपि रावणः सेनां व्यवस्थिततयैव स्थापयति। अन्यच्च सा च नगरी त्रिकूटपर्वतस्य उपरि अस्ति। अतः शत्रुः कोऽपि कुतश्चित् आगतः चेदपि रक्षकभटैः ज्ञायते एव। एवं सर्वथा दुर्भेद्या दुर्ज्ञेया च अस्ति लङ्का। तत्र किं प्रचलति इति वार्तां बाह्यः कोऽपि ज्ञातुं न शक्नोति। नगर्याः द्वाराणां समीपे लक्षशः आयुधधारिणः राक्षसाः भवन्ति। मध्यभागे अपि असङ्ख्याः राक्षसभटाः भवन्ति। एवं स्थिते अपि मया तत्र उत्पातः उत्पादितः। परिखाक्रमणार्थं स्थापिताः काष्ठसेतवः मया भञ्जिताः। बहवः राक्षसाः सेनाप्रमुखाः च मारिताः। अग्निदाहेन महती हानिः नगरे उत्पादिता। अतः लङ्कायाः शक्तिः किञ्चिदिव क्षीणा। तेषु महती भीतिः उत्पन्ना अपि। यदि अङ्गदः, द्विविदः, जाम्बवान्, मैन्दः, नीलः, गवयः अहं च गच्छेम तर्हि लङ्कां निश्चयेन जेष्यामः। समुद्रक्रमणम् अपि समस्यायै न भवेत्। अतः अचिरात् एव मुहूर्तनिश्चयः वरम्'' इति उक्तवान् हनूमान्।

एतत्सर्वं श्रुत्वा रामः सुग्रीवम् उक्तवान्— ''सर्वं भवता अपि श्रुतं खलु? इदानीम् एव प्रस्थानं करवाम वयम्। एषः अभिजिन्मुहूर्तः सर्वकार्यार्थसाधकः'' इति।

सुग्रीवेण प्रस्थानम् अङ्गीकृतम्। तदा रामः प्रयाणविषये एवम् उक्तवान्— ''सेनानायकः नीलः अग्रणीः सन् सेनां फलसमृद्धियुक्तेन मार्गेण नयतु। अस्माकं गमनं ज्ञात्वा शत्रवः विघ्नम् उत्पादयेयुः। अतः केचन अग्रे गत्वा मार्गम् उभयतः परीक्ष्य मार्गस्य निष्कण्टकतां दृढीकुर्वन्तु। प्लवनसमर्थाः केचन आकाशमार्गेण गच्छन्तः अग्रिमं मार्गं निश्चिनुवन्तु। येषां सामर्थ्यं न्यूनं ते अत्रैव तिष्ठन्तु। कष्टसहने ये समर्थाः, युद्धे च ये निपुणाः ते केवलम् इतः प्रस्थानं कुर्वन्तु। केचन सेनायाः

आन्तरिकव्यवस्थाभारं निर्वहन्तु" इति।

रामस्य निर्देशस्य अनुगुणं वानरसेना तस्मिन् एव क्षणे ततः प्रस्थिता। महाकायः गजः, बलशाली गवयः, शूराग्रणीः गवाक्षः च सेनायाः अग्रभागे स्थितवन्तः।

प्लवने विशेषसामर्थ्यवान् ऋषभः सेनायाः दक्षिणपार्श्वस्य रक्षणार्थं नियुक्तः। गन्धमादनः वामपार्श्वस्य रक्षकः अभवत्। रामम् स्कन्धे उपवेश्य हनूमान् सेनायाः मध्ये गच्छति स्म। लक्ष्मणं स्वस्कन्धे उपवेश्य अङ्गदः हनूमन्तम् अनुसृतवान्। जयकारः घोष ध्वनिः च अधिकतया न कृतः।

सैन्यं दक्षिणाभिमुखं प्रस्थितम्। वानराः प्लवमानाः, कूर्दन्तः, भयरहिते विशालप्रदेशे सिंहनादं कुर्वन्तः च अग्रे गच्छन्ति स्म। मार्गे यत् कन्दमूलफलादिकं लभ्यते तदेव तेषाम् आहारः। महासमुद्रसदृशी वानरसेना पर्वतान्, नदीः, अरण्यानि च अतिक्रम्य अग्रे गच्छन्ती अस्ति। मार्गे अल्पा अपि विपत् न उपस्थिता। बन्धुगृहं गच्छत्सु यथा उत्साहः भवति तथा उत्साहः आसीत् युद्धार्थं प्रस्थितेषु वानरेषु अपि।

अल्पेन एव कालेन महेन्द्रपर्वतः सम्प्राप्तः। रामः पर्वतशिखरम् आरुह्य समुद्रं दृष्टवान्। सुग्रीवः लक्ष्मणः चापि तेन सह आस्ताम्। शिखरात् अधः आगत्य सेनायाः पार्श्वे स्थित्वा सुग्रीवम् उक्तवान् रामः– "इदानीम् अस्माभिः अत्रैव वसतिः कल्पनीया।



समुद्रलङ्घनार्थं कः उपायः इति चिन्तनीयम्। चिन्तनार्थं कालः अपेक्षितः एव। अतः तावत्कालं सेना विश्रान्तिसुखम् अनुभवतु। किन्तु केनापि समूहं परित्यज्य दूरे न गन्तव्यम्। सर्वासु दिक्षु प्रबला रक्षणव्यवस्था भवतु। गूढचराणां दृष्टिः सर्वत्र भवतु" इति।

सुग्रीवः प्रमुखान् आहूय करणीयानि कार्याणि आदिश्य तान् प्रेषितवान्। त्रिषु स्थलेषु सेनानिवेशः उपकल्पितः।

समुद्रस्य अपारतां, महतां तरङ्गाणां निरन्तरतां, तदा तदा दृष्टिपथम् आगच्छतां समुद्रवासिनां जलचराणां क्रूरतां, समुद्रस्य अगाधतां च दृष्ट्वा वानराः परस्परं वदन्ति स्म– "एतस्य समुद्रस्य क्रमणार्थं कीदृशः



मार्गः चिन्त्येत? सेतुनिर्माणादिकम् अत्र सम्भाव्येत किम्? यदि न, तर्हि कः अन्यः मार्गः?'' इति।

अत्र लङ्कायाम् अपि चिन्ताक्रान्तता। हनूमता रावणः सर्वथा पराजितः आसीत्। शत्रुबलेन दृष्टिपातं कर्तुम् अपि यत्र न शक्यते तादृशम् अभेद्यं दुर्गं कपिः एषः एकाकितया प्रविश्य सीताम् अन्विष्टवान् आसीत्। चैत्रप्रासादादीन् भञ्जितवान् आसीत्। बहून् राक्षसयोधान् मारितवान् आसीत्। सभाम् अपि निर्भयं प्रविश्य अप्रियवचनानि सधैर्यम् उक्त्वा अन्ते समग्रायां लङ्कायाम् अग्निं योजितवान् आसीत्।

एतत्सर्वं रावणस्य हृदयं दहति स्म। सः सभाम् आयोज्य– ''इदानीम् अस्माभिः किं करणीयम्? कः उपायः आश्रितः चेत् अस्माकं जयः हितं च सिध्येत्?'' इति पृष्टवान्।

रामः महत्या सेनया सह लङ्काम् उद्दिश्य आगच्छन् अस्ति इति वार्ता रावणेन ज्ञाता आसीत्। कपिसेना केनापि उपायेन समुद्रलङ्घनं करिष्यति एव इति सः जानाति स्म। एवं स्थिते शत्रुसम्मुखीकरणं कथम्, प्रजानां, सेनायाः, नगर्याः च रक्षणं कथम् इति सभायां पृष्टवान् रावणः।

तदा उत्साहिनः केचन राक्षसाः उक्तवन्तः– ''प्रभो, अस्माकं महती सेना अस्ति। अपूर्वाणि आयुधानि अस्मत्समीपे सन्ति। अप्रतिमवीराः अपि अत्र सन्ति। अतः काऽपि चिन्ता करणीया नास्ति। शिवस्य आत्मीयः कुबेरः अपि भवता वशीकृतः। देवेन्द्रः अपि भवतः आज्ञां शिरसा पालयति। त्रिषु लोकेषु भवतः नाम श्रुत्वा भीतिम् अप्राप्नुवन् कोऽपि नास्ति। सर्वे राजानः भवतः मन्दहासम् अनुग्रहं भावयन्ति। एवं स्थिते का कथा रामस्य? वानरसेनायाः नाशनार्थम् इन्द्रजित् एकः एव अलम्। अतः प्रभो, काऽपि चिन्ता करणीया नास्ति'' इति।

अत्रान्तरे प्रहस्तः उत्थाय– ''प्रभो, भवतः पुरतः स्थातुं देव-दानव-गन्धर्वादयः अपि न शक्नुवन्ति। वयं यदा किञ्चित् अजागरूकाः आस्म तदा सः वानरः हनूमान् आगत्य कपिचेष्टां प्रदर्श्य अधावत्। भवतः दयया एव

सः सजीवं गतः। यदि भवता तस्य मरणम् आज्ञापितं स्यात् तर्हि सः एतावता नामावशिष्टः अभविष्यत्। भवान् इदानीम् आज्ञां करोतु। अहं समग्रे प्रपञ्चे स्थितान् वानरान् समूलं नाशयित्वा जगत् वानररहितं करिष्यामि'' इति उक्तवान्।

दुर्मुखः नाम राक्षसः उत्थाय— 'वानराणाम् उन्मूलनाय अहम् एकः एव अलम्' इति उक्तवान्। वज्रदंष्ट्रः नाम अन्यः— 'अहं गत्वा न केवलं वानरान्, रामलक्ष्मणसुग्रीवान् अपि संहृत्य आगमिष्यामि' इति उक्तवान्। 'मम हस्ते स्थितं परिघायुधम् एकम् एव कपिकुलनाशनाय अलम्' इति अन्यः उक्तवान्। एवं यदा एकैकः वदति तदा अन्ये राक्षसाः वानरान् उपहसन्तः अट्टहासं कुर्वन्ति स्म।

वज्रदंष्ट्रः अन्यम् अपि उपायं सूचितवान्— ''कामरूपिणः राक्षसाः मानवरूपं प्राप्य सहस्राधिकसङ्ख्यया रामसमीपं गच्छेयुः। 'वयं भरतेन प्रेषिताः। भरतः सेनया सह आगच्छन् अस्ति' इति ते वदेयुः। तावता लङ्कातः निर्गता लङ्कासेना आकाशात् शिलाकण्टकादीनि पातयित्वा वानरसेनां नाशयेत्। एतत्सर्वं दृष्ट्वा दुःखावेगवशात् सुग्रीवः रामः लक्ष्मणः इत्यादयः हृदयस्तम्भनं प्राप्य प्राणैः वियुक्ताः भविष्यन्ति'' इति।

तदा निकुम्भः उत्थाय उक्तवान्— ''एतावान् परिश्रमः किमर्थम्? अहम् एकः एव गत्वा रामं लक्ष्मणं वानरप्रमुखं च संहृत्य आगमिष्यामि। तदा युद्धकथा दूरीकृता भविष्यति'' इति। 'यदि अनुज्ञा स्यात् तर्हि सर्वान् वानरान् खादित्वा लङ्कायां निश्चिन्तवातावरणं परिकल्पयिष्यामि' इति वज्रहनुः नाम राक्षसः उक्तवान्।

एवं राक्षसाः आयुधम् उन्नीय स्वसामर्थ्यख्यापने एव मग्नाः आसन्। सर्वे रावणस्य प्रीतिसम्पादने निरताः। किन्तु कोऽपि कालोचितसूचनादाने समर्थः न आसीत्।





# आत्मसमर्पणम्

आफ्रिकादेशस्य अरण्ये निवसताम् अटविकानां दलस्य नायकः आसीत् ऊरुकः। तस्मिन् एव अरण्ये तस्य प्रतिस्पर्धिदलम् अन्यत् आसीत्। एतस्य प्रतिस्पर्धिदलस्य नायकः आसीत् ओहायः।

अनयोः दलयोः सदापि विरोधः। तयोः दलयोः युद्धं तदा तदा भवति स्म। उभयम् अपि दलं परस्परनाशार्थं निरन्तरं प्रयत्नं करोति स्म।

ओहायस्य दले दृढकायाः तरुणाः बहवः आसन्। तस्य दलम् आकारेण महत् अपि। अतः तस्य दलस्य सामर्थ्यम् ऊरुकस्य दलस्य सामर्थ्यस्य अपेक्षया अधिकम् आसीत्। किन्तु सर्वेषु सङ्घर्षेषु ओहायस्य दलस्य एव पराजयः भवति स्म।

तस्य एकं प्रबलं कारणम् अपि आसीत्। ऊरुकः एकं विशिष्टं चिकित्साक्रमं जानाति स्म। तद्बलेन सः अपूर्वम् औषधरसं सज्जीकरोति स्म। तस्य लेपनं कृतं चेत् महाव्रणः अपि क्षणमात्रेण लुप्तः भवति स्म। विषबाणैः व्रणिताः प्राणापायस्थितौ स्थिताः अपि तस्य औषधरसस्य आघ्राणतः सेवनतः च उज्जीविताः भवन्ति स्म। अतः ऊरुकस्य पक्षे मरणं प्राप्नुवतां सङ्ख्या अतीव न्यूना। किन्तु ओहायस्य पक्षे न तथा। यदा यदा युद्धं भवति तदा शताधिकाः तत्पक्षीयाः मृताः भवन्ति स्म एव।

तस्य औषधरसस्य निर्माणक्रमम् अन्यः कोऽपि न जानाति स्म।

ऊरुकस्य पुत्रस्य नाम कथाञ्चः इति। 'मम अनन्तरं मत्पुत्रः एव दलनायकः भविष्यति' इति जानन् ऊरुकः कस्मिंश्चित् उत्तमे दिने दिव्यौषधनिर्माणतन्त्रं पुत्रं बोधितवान्।

"आफ्रिकादेशीया जानपदकथा"



'ऊरुकः स्वपुत्रं कथाञ्च दिव्यौषधनिर्माणतन्त्रं बोधितवान् अस्ति' इति वार्ता ओहायेन कथमपि ज्ञाता एव। तस्य औषधतन्त्रस्य वशीकरणार्थं सः एकम् उपायं रचितवान्।

कदाचित् ओहायस्य विश्वासार्हाः अनुचराः उपायेन गत्वा ऊरुकं तत्पुत्रं कथाञ्चं च अपहृत्य आनीय बन्धने स्थापितवन्तः। तौ मारणीयौ इति ओहायस्य चिन्तनं न आसीत् एव। सामोपायेन, दण्डोपायेन वा तयोः अन्यतमस्य मुखात् औषधनिर्माणतन्त्रं ज्ञातव्यम् इति तस्य विचारः आसीत्।

ओहायस्य अनुचराः ऊरुकं कथाञ्चं च पर्वतशिखरं नीत्वा शिलायां परस्पराभिमुखं बद्धवन्तः। विविधैः कृत्यैः तौ बहुधा पीडितवन्तः च। दुष्टपिपीलिकाः तयोः शरीरे पातितवन्तः। कण्टकैः तयोः शरीरं व्रणितं कृतवन्तः। जलदानम् अपि निराकुर्वन्तः तौ आतपे स्थापितवन्तः। एवं बहुधा पीडितं चेदपि ऊरुकस्य कथाञ्चस्य वा मुखात् औषधनिर्माणतन्त्रं न निर्गतम्।

ओहायस्य कश्चन अनुचरः द्वौ महामण्डूकौ आनीतवान्। तौ घोरमण्डूकौ दशतः चेत् मरणं सुनिश्चितम्। तयोः घोरमण्डूकयोः दर्शनतः कथाञ्चस्य शरीरे भीतिः उत्पन्ना। ओष्ठे विचलिते। तस्य मुखं दृष्टं चेत् ज्ञायते स्म यत् सः किमपि वक्तुम् उद्युक्तः इति। पुत्रस्य एतादृशीं दशां दृष्ट्वा ऊरुकः चिन्ताक्रान्तः जातः।

"इदानीं किं वदति? यदि प्राणाः प्रियाः स्युः तर्हि दिव्यौषधनिर्माणतन्त्रं वदतु। अन्यथा एतयोः घोरयोः मण्डूकयोः दंशनतः प्राणान् त्यक्तुं सिद्धः भवतु" इति ऊरुकम् उक्तवान् ओहायः। कथाञ्चम् अपि एवम् एव उक्तवान् सः।

ऊरुकः पुत्रं सकृत् दृष्ट्वा मनसि किमपि निश्चित्य ओहायम् उक्तवान्– "तच्च तन्त्रं मज्जातीयैः केवलं ज्ञातव्यम् इति तु नियमः। मम जातीयस्य अन्यस्य पुरतः एतत् तन्त्रम् अन्यजातीयं वक्तुम् अहं न शक्नोमि। अतः मम पुत्रः झटिति प्राणान् यथा त्यजेत् तथा

विषबाणप्रयोगेण, घोरमण्डूकदंशनेन च तं मारयतु। तदा तु अहं भवन्तं तत् तन्त्रं बोधयितुं शक्नोमि। एवं मया कृतम् इति मम जातीयैः अन्यैः तु न ज्ञायते। मम मानः रक्षितः भवति" इति।

ओहायः एतत् अङ्गीकृतवान्। ओहायस्य सूचनायाः अनुगुणं तदनुचराः कथाञ्चं मारितवन्तः। विषप्रयोगतः कृष्णवर्णतां प्राप्तवत् पुत्रस्य शरीरं दृष्ट्वा ऊरुकः क्षणमात्रं खिन्नः। किन्तु तस्य नेत्राभ्याम् अश्रूणि न आगतानि। तेन हृदयं दृढीकृतम् आसीत्।

"भवतः पुत्रः मृतः। इदानीं दिव्यौषधनिर्माणतन्त्रं वदतु तावत्" इति उक्तवान् ओहायः। ऊरुकस्य बन्धनम् अपि अपनीतवान् सः।

"भवान् मम पुत्रं न मारितवान्, अपि तु तस्य तन्त्रस्य ज्ञानार्थं स्थितम् अवकाशं मारितवान्" इति गाम्भीर्येण उक्तवान् ऊरुकः।

"कथम् एतत्? किं वदन् अस्ति भवान्?" इति आश्चर्येण पृष्टवान् ओहायः।

"सर्वं सुस्पष्टम्। घोरमण्डूकस्य दर्शनतः मम पुत्रः विचलितः जातः। सः भीत्या कम्पते स्म। एतस्य तात्पर्यं यत् सः तत् तन्त्रं वक्तुं सिद्धः अस्ति इति। अतः अहम् उपायेन भवद्द्वारा तं मारितवान्। इतः परं कथमपि तत् तन्त्रं ज्ञातुं न अर्हन्ति भवन्तः। अहं तु प्राणान् वा त्यजेयं, दिव्यौषधनिर्माणतन्त्रं तु न वदिष्यामि एव। अन्यच्च अहं न वदामि चेत् यथा मम मरणं निश्चितं तथा वदामि चेदपि मम मरणं निश्चितम् एव इति तु अहं सुस्पष्टं जानामि। इतः परं किं, मरणेन सह अपख्यातिम् अपि प्राप्तुम् अहं न इच्छामि। मम मरणेन सह तस्य तन्त्रस्य अपि मरणं भविष्यति" इति उक्त्वा झटिति अग्रे गत्वा तस्मात् पर्वतशिखरात् अगाधे खाते उत्पतितवान्। एवं दिव्यस्य तन्त्रस्य पावित्र्यरक्षणार्थं सः आत्मानम् एव समर्पितवान्।





# चतुरा परिचारिका

काञ्चीपुरराज्यं पूर्वं कनकवर्मा नाम राजा पालयति स्म। विलासमयं जीवनम् इच्छति स्म कनकवर्मा। राजभवनस्य पार्श्वे तेन एकं रमणीयम् उद्यानं निर्मापितम् आसीत्। तत्र दूरदूरदेशेभ्यः आनीतानि फल-पुष्पसस्यानि आरोपितानि आसन्।

तस्य रमणीयस्य उद्यानस्य मध्ये एकं सुन्दरं सरोवरम् आसीत्। सरोवरं परितः उन्नताः बहवः वृक्षाः आसन्। ते च वृक्षाः विविधाभिः पुष्पिताभिः लताभिः आवृताः आसन्। अतः उद्यानस्य शोभा चतुर्गुणितं प्रवृद्धा आसीत्।

कदाचित् महाराज्ञी एतस्मिन् सरोवरे स्नानं कर्तुं गतवती। स्नानार्थं सरोवरप्रवेशतः पूर्वं सा आभरणानि अपनीय परिचारिकायाः हस्ते दत्तवती आसीत्। एवं दत्तेषु आभरणेषु रत्नहारः अपि अन्यतमः आसीत्।

राज्ञ्या दत्तानि आभरणानि सरोवरतीरे स्थापयित्वा परिचारिका पुष्पाणि सङ्ग्रहीतुम् उद्युक्ता। किन्तु अत्रान्तरे तत्रत्येषु वृक्षेषु वसन्ती काचित् वानरी विना शब्दम् अधः आगत्य रत्नहारं स्वीकृत्य वृक्षम् आरुह्य उपाविशत्।

रत्नहारं स्वीकृत्य यदा वानरी धावन्ती आसीत् तदा परिचारिका दृष्टवती। किन्तु वराकी सा किं वा कर्तुं शक्नुयात्? सा मौनं पश्यन्ती स्थितवती।

राज्ञी स्नानं समाप्य तीरम् आगतवती। वस्त्राणि आभरणानि च धृतवती। आभरणधारणसमये तया ज्ञातं यत् रत्नहारः न दृश्यते इति। सा कोपमिश्रितेन स्वरेण पृष्टवती– "रत्नहारः कुत्र?" इति।

भीता परिचारिका वस्तुस्थितिं गोपयन्ती उक्तवती– "भवत्या दत्तानि आभरणानि

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

अत्रैव स्थापितवती आसम्। रत्नहारः कथम् अदृश्यतां गतः इति तु न ज्ञायते। अथवा भवत्या अत्र आगमनसमये रत्नहारः न धृतः स्यात्। प्रासादे एव स्थापितः स्यात्" इति।

खेदेन ततः गता राज्ञी महाराजं प्रवृत्तं समग्रं निवेदितवती। महाराजः मन्त्रिणम् आहूय आज्ञापितवान् यत् सायङ्कालाभ्यन्तरे रत्नहारचोरः अन्वेष्टव्यः इति। मन्त्री तस्मिन् एव क्षणे दण्डनायकम् आहूय प्रवृत्तं निवेद्य आज्ञापितवान् यत् सूर्यास्तात् पूर्वं चोरः न अन्विष्टः चेत् भवान् उद्योगतः निष्कास्यते इति।



दण्डनायकः शतसङ्ख्याकैः सैनिकैः सह ततः निर्गत्य समग्रे नगरे अन्वेषणं कृतवान्। चोरः कः, सः कीदृशः इति कोऽपि न जानाति। दण्डनायकः भावयति स्म यत् चोरः कश्चन छिन्न-मलिनवस्त्रधारी श्मश्रुलः निर्धनः स्यात् इति।

समग्रे नगरे नगरं परितः च अन्वेषणं प्रवृत्तम्। सूर्यास्तसमये कश्चन कृशाकायः श्मश्रुलः मलिनवस्त्रधारी निर्धनः सैनिकैः गृहीतः।

चोरः गृहीतः इति वार्ता ज्ञाता महाराजेन। सः सन्तोषेण आस्थानमण्डपम् आगतवान्। "रे, चोरितः रत्नहारः कुत्र?" इति क्रोधमिश्रितस्वरेण पृष्टवान् च।

सः निर्धनः पुरुषः नितरां भीतः अस्ति। 'अहं चोरः सर्वथा न इति वदामि चेदपि अत्र कोऽपि न अङ्गीकरोति। तथा कथनतः च मया कठिनं दण्डनं प्राप्तव्यं भवेत्' इति आलोच्य सः निर्धनः कम्पमानस्वरेण उक्तवान् यत् मया स च हारः कोषाध्यक्षाय दत्तः इति।

राजा भटद्वारा कोषाध्यक्षम् आनायितवान्। "एतेन दत्तः रत्नहारः कुत्र?" इति कोपेन पृष्टवान् च।

कोषाध्यक्षः राज्ञः व्यवहारं सम्यक् जानाति स्म। 'अन्यस्य उपरि दोषः आरोपितः चेत् अहं कष्टात् मुक्तः भवामि' इति आलोच्य सः उक्तवान्– "हारः तु आस्थानज्योतिषिकाय मया दत्तः" इति।

भटाः ततः गत्वा आस्थानज्योतिषिकं राज्ञः



पुरतः उपस्थापितवन्तः। राजा तमपि कोपेन पृष्टवान्– "रत्नहारः कुत्र?" इति।

ज्योतिषिकः सधैर्यम् उक्तवान्– "रत्नहारम् अहं मन्त्रिणः कुमाराय दत्तवान् अस्मि" इति।

एतावता सुदीर्घः कालः अतीतः आसीत्। अतः राजा– "अद्य एतावता अलम्। श्वः प्रातः विचारणा पुनः अनुवर्तिष्यते। एतान् दोषभागिनः अद्य रात्रौ कारागारे एव स्थापयन्तु" इति आदिश्य सिंहासनात् उत्थाय अन्तःपुरं गतवान्।

रात्रौ मन्त्रिणः निद्रा नास्ति। 'रत्नहारचौर्यस्य आरोपः आरम्भे निर्धनस्य उपरि आसीत्। अनन्तरं व्यक्तितः व्यक्तिं गच्छन् मम पुत्रस्य उपरि आपतितः। वस्तुतः एतस्य प्रकरणस्य आन्तर्यम् अन्यत् एव स्यात्। तत् कथमपि मया ज्ञातव्यम्' इति आलोच्य मन्त्री विना शब्दं कारागारसमीपं गत्वा निलीय स्थित्वा अन्तः प्रचलन्तं वार्तालापं श्रुतवान्।

किञ्चित्कालं रोदनशब्दः श्रुतः। अनन्तरं निर्धनस्य ध्वनिः श्रुतः– "कोषाध्यक्षवर्य! मां क्षाम्यतु तावत्। प्राणरक्षणार्थं मया असत्यम् उक्तम्। वस्तुतः तु रत्नहारविषये अहं किमपि न जानामि" इति।

अनन्तरं कोषाध्यक्षः उक्तवान्– "श्रीमन्, भवान् ज्योतिषिकः ज्योतिषबलात् वस्तुस्थितिं ज्ञातुं शक्नुयात् इति आलोच्य मया रत्नहारः भवते दत्तः इति उक्तम्। आत्मरक्षणार्थं मया किमपि करणीयम् आसीत् एव" इति।

तदा ज्योतिषिकः– "अत्र ज्योतिषं कुत्र? गणनादिकं कृत्वा ज्ञातुं समयः वा कुत्र आसीत्? अतः एव मन्त्रिपुत्राय दत्तम् इति उक्त्वा आत्मरक्षणं कृतवान् अहम्" इति उक्तवान्।

एतत्सर्वं श्रुत्वा वस्तुस्थितिः अन्या एव अस्ति इति ज्ञातवान् मन्त्री। सः तस्मिन् मध्यरात्रसमये एव गत्वा राजानम् उत्थाप्य स्वेन श्रुतं सर्वं निवेदितवान्।

मन्त्रिणः वचनं श्रुत्वा राजा दीर्घं निःश्वसितवान्। 'एवं तर्हि रत्नहारचोरः कः

स्यात्?' इति आरात्रि चिन्तनं कृतवान् सः।

सूर्योदयः जातः। राजा परिचारिकाम् आनायितवान्। कोपेन तां तर्जितवान् च– "अये, सत्यं वदतु तावत्। अन्यथा भवतीं खण्डशः कर्तयित्वा काकगृध्रेभ्यः समर्पयिष्यामि" इति।

एतत् श्रुतवत्याः परिचारिकायाः शरीरे कम्पनम् उत्पन्नम्। प्राणाः कस्य वा प्रियाः न भवन्ति? परिचारिका मन्दस्वरेण उक्तवती– "महाराज! अहं निरपराधिनी। सरोवरपार्श्वे स्थिते वृक्षे निवसन्ती वानरी रत्नहारं चोरितवती स्यात् इति सन्देहः मम" इति।

"वानरीविषये किमर्थं सन्देहः? किं सा भवत्याः अपेक्षया अपि सुन्दरी?" इति पृष्टवान् राजा।

"तथा न प्रभो, महाराज्ञीम् अनुकुर्वती सा वानरी सविलासं गच्छति स्म। एतत् मया प्रत्यक्षं दृष्टम्। यावत् महाराज्ञी स्नाति स्म तावत् सा वानरी अपि स्नानाभिनयं करोति स्म। महाराज्ञी यथा मन्दहासं प्रकटयति तथा मन्दहासं प्रकटयितुं प्रयत्नं करोति स्म अपि सा" इति उक्तवती सा परिचारिका।

एतत् श्रुतवतः महाराजस्य कोपः नितरां प्रवृद्धः। 'महाराज्ञीं वानर्या सह तोलयन्ती एषा निर्दयं विचारणीया' इति चिन्तितवान् राजा। किन्तु रत्नहारः कुत्र इति अन्वेष्टव्यं खलु? अतः सः कोपं किञ्चित् निगृह्य– "एवं तर्हि तया वानर्या रत्नहारः नीतः इति खलु भवत्याः आशयः? रत्नहारः तया कुत्र स्थापितः



स्यात्? रत्नहारस्य प्रतिप्राप्तिः कथम्?" इति पृष्टवान् राजा।

"प्रभो, अहं चिन्तयामि— तत्र न तावान् क्लेशः इति" इति मन्दहासपूर्वकम् उक्तवती परिचारिका।

"क्लेशः नास्ति? कथम् एतत्?" इति कोपेन एव पृष्टवान् राजा।

"यदा भवान् राजभवने भवति तदा खलु राज्ञी रत्नहारं धरति?" इति प्रतिप्रश्नं कृतवती परिचारिका।

"आम्। किं तेन?" इति पृष्टवान् राजा।

"प्रभो, मम वचनं कदाचित् भवतः कोपाय भवेत्। क्षन्तव्या अहम्। 'वानरी राज्ञीम् अनुकरोति स्म, रत्नहारं च अचोरयत्' इत्यस्य परिशीलनात् ज्ञायते यत् राजवेषेण अलङ्कृतः कोऽपि वानरः तस्याः समीपं नीतः चेत् रत्नहारः प्राप्येत इति" इति उक्तवती परिचारिका।

परिचारिकायाः वचनं श्रुतवतः महाराजस्य मुखे अपि मन्दहासः आगतः। राज्ञीं वानर्या, राजानं वानरेण च तोलितवती आसीत् परिचारिका। एतत् जानन् एव हसितवान् आसीत् राजा। राज्ञा रत्नहारार्थं यः विचारक्रमः अनुसृतः आसीत् तम् उपहसितवती आसीत् परिचारिका।

रत्नहारः कथमपि प्राप्तव्यः आसीत् एव। अतः राजा एकं वानरम् आनायितवान्। स च वानरः राजवेषेण अलङ्कृतः। तेन वानरेण सह राजा मन्त्री च उद्यानं गतवन्तौ।

उद्यानस्य वृक्षे स्थितः वानरी राजवेषेण अलङ्कृतं वानरम् अपश्यत्। स्वयं च झटिति वृक्षकोटरतः रत्नहारम् आनीय धृत्वा विलासं प्रदर्शयन्ती वानरस्य समीपम् आगच्छत्।

तावता राजभटाः झटिति अग्रे गत्वा वानरीं गृहीत्वा ततः रत्नहारं वशीकृतवन्तः। वानरी कीच्कुर्वती वृक्षम् आरूढवती।

राजा राज्ञ्यै रत्नहारं दत्त्वा निरपराधिनः कोषाध्यक्षादीन् बन्धविमुक्तान् कृतवान्। परिचारिकायाः बुद्धिमत्तां दृष्ट्वा सन्तुष्टः सः तस्यै पारितोषिकं दत्तवान्।






# योग्यः वरः

विजयपुरराज्यस्य आस्थानज्योतिषिकः रामशर्मा। कदाचित् सः नद्यां स्नात्वा प्रत्यागच्छन् आसीत्। तदा वृक्षशाखायाम् आत्मानम् उद्‌बध्य आत्महत्यार्थं प्रयतमानः कश्चन युवकः तेन दृष्टः। रामशर्मा झटिति तस्य समीपं गत्वा तं तस्मात् प्रयत्नात् निवार्य आत्महत्या सर्वथा अनुचिता इति बोधयित्वा अन्ते पृष्टवान्– "भवतः नाम किम्? कः ग्रामः भवतः?" इति।

"मम नाम जयसिंहः इति। एतस्मिन् विजयपुरे एव मम वासः" इति उक्तवान् सः तरुणः।

"दर्शनेन तु भाति यत् भवान् पञ्चविंशतिवर्षीयः स्यात् इति। एतस्मिन् एव वयसि एवं निर्वेदः किमर्थम्?" इति पृष्टवान् रामशर्मा।

"अहं काञ्चित् इष्टवान्। किन्तु तस्याः परिणयः मम ललाटे लिखितः नास्ति इति भाति। एवं स्थिते मम का अन्या गतिः, ऋते प्राणत्यागतः?" इति सविषादम् उक्तवान् जयसिंहः।

"भवतः हस्तं प्रदर्शयतु तावत्" इति उक्त्वा रामशर्मा जयसिंहस्य हस्तं स्वीकृत्य रेखाः सम्यक् परिशील्य पुनः उक्तवान्– "यां भवान् इष्टवान् ताम् एव परिणेष्यति। भवतः विवाहः सवैभवं प्रचलिष्यति" इति।

"भवतः वचने कथम् अहं विश्वासं प्राप्नुयाम्? यतः परिस्थितिः मदनुकूला न दृश्यते खलु?" इति उक्तवान् जयसिंहः।

"मित्र! विजयपुरस्य आस्थानज्योतिषिकः रामशर्मा अहं वदन् अस्मि। मम वचनं मिथ्या न भविष्यति" इति साभिमानम् उक्तवान् रामशर्मा।

"श्रीमन्! अहं तु जात्या क्षत्रियः। यस्यां

मम अनुरागः सा च ब्राह्मणकुलजाता। तस्याः मातापितरौ अब्राह्मणाय मह्यं कथं वा पुत्रीं दद्याताम्?'' इति पृष्टवान् जयसिंहः।

''ललाटे यत् लिखितं तत् ब्रह्मणा अपि परिवर्तयितुं न शक्यम्। लोके योग्यतानिर्णायकं तु गुणादिकं, न कुलादिकम्। अतः चिन्ता मास्तु'' इति उत्तेजकवचनम् उक्तवान् रामशर्मा।

''श्रीमन्! अत्र अन्यः अपि क्लेशः। मम अनुरागपात्रीभूता कन्या धनिककुले जाता। अहं तु निर्धनः। निर्धनाय मह्यं किं सा दीयेत?'' इति सन्देहं प्रकटितवान् जयसिंहः।

''भवता एव उक्तं खलु– कन्या धनिककुले जाता इति। तस्याः पिता जामात्रे भवते सम्पत्तेः भागं ददाति चेत् समस्या परिहृता'' इति उक्तवान् रामशर्मा।

''भवता युक्तम् एव उक्तम्। किन्तु अपरा समस्या नाम– कन्यायाः पिता राजास्थाने उच्चोद्योगे अस्ति। अहं च निरुद्योगी। एवं स्थिते, तस्याः पिता किं मह्यं स्वपुत्रीं दद्यात्?'' इति पुनरपि पृष्टवान् जयसिंहः।

''न एषा समस्या। सः भावी श्वशुरः स्वप्रभावबलात् भवते अपि राजास्थाने समीचीनम् उद्योगं दापयति चेत् सर्वं सुसम्पन्नम्'' इति हसन् उक्तवान् रामशर्मा।

''इदानीं मयि विश्वासः आगतः यत् यस्यां मम अनुरागः सा एव मया प्राप्तुं शक्या इति'' इति वदन् जयसिंहः रामशर्माणं साष्टाङ्गं नमस्कृतवान्।

''अभिलषितवधूप्राप्तिरस्तु। वत्स! उत्तिष्ठतु। भवतः हृदयहारिणी सा कन्या का?'' इति मन्दहासपूर्वकं पृष्टवान् रामशर्मा।

''न अन्या। भवतः द्वितीयपुत्री दमयन्ती एव सा'' इति उक्तवान् जयसिंहः।

''एवं वा? अहो, बुद्धिमत्ता भवतः! वाग्जाले मां पातितवान् एव भवान्'' इति हसन् उक्तवान् रामशर्मा।

पुनः अल्पे एव काले दमयन्ती-जयसिंहयोः विवाहः सवैभवं सम्पन्नः।



### लुप्यमानः अस्ति नयागाराजलपातः

अमेरिकादेशीयान् यात्रिकान् एकत्र, केनडादेशीयान् यात्रिकान् च अपरत्र तोषयन् नयागाराजलपातः क्रमशः लुप्यमानः साधारणप्रवाहरूपं प्राप्स्यति इति भूगर्भशास्त्रज्ञाः अभिप्रयन्ति। महता वेगेन पतत् एतस्य जलपातस्य जलम् अधस्तात् स्थिताः सुधाशिलाः क्रमशः नाशयति। अतः विज्ञानिनः एवम् ऊहां कुर्वन्ति यत् १०,००० वर्षेभ्यः पूर्वं निर्मितः एषः जलपातः इतः परं २०,००० वर्षाभ्यन्तरे साधारणनदीरूपेण परिवर्तिष्यते इति।







## पेङ्ग्विन्पक्षी

अण्टार्कटिकप्रदेशस्य स्मरणतः पेङ्ग्विन् पक्षिणः स्मृतिपथम् आगच्छन्ति, ये च मन्दं पदं स्थापयन्तः विलासं प्रदर्शयन्तः इव विहरन्ति। दक्षिणध्रुवप्रदेशे भूरिप्रमाणेन दृश्यमानाः एते उत्तरार्क्टिकप्रदेशे सर्वथा न दृश्यन्ते। एतेषु पक्षिषु सप्तदश प्रभेदाः सन्ति।




### ऊर्णनाभः पिबति, न तु खादति

ऊर्णनाभः आहारं प्राप्य किं खादति? न हि न हि, स तु पिबति। नलिकासदृशं तस्य मुखं पानोपयोगि, न तु खादनोपयोगि। तस्य मुखात् कश्चन द्रवः स्रवति, यश्च कीट-मक्षिकादीन् द्रवीकरोति। ततः ऊर्णनाभः तं द्रवं चूषति। 'टेरण्टुला'नामकः विशिष्टः ऊर्णनाभः (महाकारकः) अल्पान् मूषकान् पक्षिणः च एकदिनाभ्यन्तरे द्रवीकृत्य सेवते इति श्रूयते।

# तरणार्थं गच्छन्तः स्मः

| | |
|---|---|
| अचलः - किं भोः, किं कुर्वन् अस्ति? | Hey, what are you doing? |
| मदनः - कथापुस्तकं पठन् अस्मि। | Reading a story book. |
| अ - तर्हि उत्तिष्ठतु। आगच्छतु अस्माभिः सह। तरणार्थं गच्छन्तः स्मः वयम्। | Then get up. Come along. We are going for swimming. |
| म - कासारम् उत नदीम्? | To the lake or to the river? |
| अ - कासारे गभीरता एव न भवति। कासारस्य जलम् अस्वच्छम् अपि भवति। अतः नदीम् एव गच्छन्तः स्मः। | Lakes will never be deep. Some of them are also not clean. So we are only going to the river. |
| म - मम गृहे अद्य अन्यः कोऽपि नास्ति खलु भोः। | There is none else in the house today. |
| अ - मातापितरौ कुत्र गतवन्तौ? | Where are your parents? |
| म - सत्यनारायणपूजार्थं माता सखीगृहं गतवती। पिता च नगरं गतः। | Mother has gone to her friend's house for Satyanarayana Pooja. Father has gone to the city. |
| अ - अनुजः कुत्र? | Where is your brother? |
| म - स तु अत्रैव कुत्रापि क्रीडन् स्यात्। किन्तु तदुपरि गृहरक्षणभारः निक्षेप्तुं न शक्यः। | He must be playing somewhere here, but he cannot be trusted to look after the house. |
| अ - घण्टां यावत् गृहरक्षणं न कुर्यात् वा सः? | Can he not manage just for an hour? |
| म - तस्य नियोजनम् उचितं न खलु? | It is not right to give him that responsibility. |
| अ - तर्हि भवान् न आगच्छति? | You are not coming then, am I right? |
| म - अद्य आगन्तुं न शक्नोमि। श्वः चेत् आगच्छेयम्। | Not today. If it is tomorrow, I may. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां मार्च्-९२ मासे प्रकटयिष्यामः।



M. Natarajan



Devidas Kasbekar

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जनवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'नवम्बर्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **एष बालको दर्शितासक्तिः इष्टक्रयणे।**

द्वितीयचित्रम् - **बालकावेतौ सक्तचित्तौ क्रीडासाधने।**

प्रेषकः - श्री कृ. रङ्गस्वामी ४७, मरियप्पनगरम्, अण्णामलैनगरम्-६०८००२

---


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ४८-००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६



Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.



The stories, articles and designs contained herein are exclusive property of the Publishers and copying or adapting them in any manner will be dealt with according to law.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | | | |
|---|---|---|---|
| अगाधता - | Depth | पाण्डुलेखः - | Manuscript |
| अग्रणीः - | Leader | मण्डूकः - | Frog |
| अनुमता - | Agreed | मत्कुणः - | Bedbug |
| आकाशवाणी - | Radio | मधुमक्षिकाः - | Honeybee |
| आत्महत्या - | Suicide | मातामही - | Mother's mother |
| आवर्तमाना - | Revolving in mind | माषः - | Blackgram |
| उपकरणम् - | Instrument | मूल्याङ्कः - | Postage stamp |
| उपेक्षा - | Negligence | यावानलः - | Jowar |
| उलूकः - | Owl | रूक्षः - | Not gentle |
| ऊर्णनाभः - | Spider | वानरी - | Monkey (Female) |
| ग्राहकः - | Customer | विमाता - | Stepmother |
| चटकः - | Sparrow | शिरोवेदना - | Headache |
| चूषति - | Sucks | श्मश्रुलः - | Bearded man |
| दार्वाघाटः - | Woodpecker | सण्डः - | Stray bull |
| दौहित्री - | Daughter's daughter | सन्दर्शनम् - | Interview |
| नखः - | Nail | सन्धिः - | Agreement |
| निकषोपलः - | Touchstone | सर्वकारः - | Government |
| निर्वेदः - | Utter disgust | सौचिकः - | Tailor |
| परिखा - | Moat | हृदयस्तम्भनम् - | Heart failure |

* * *

अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दामामा



प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में –
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
–और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती

**चन्दे की दरें (वार्षिक)**

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 93.00 वायु सेवा से रु. 168.00

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 99.00 वायु सेवा से रु. 168.00

अपने चन्दे की रकम डिमांड ड्रॉफ्ट या मनी ऑर्डर द्वारा
'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

